रजि. संख्या RM 26065/72 ISSN-2249-9296

QUARTERLY PEER REVIEWED RESEARCH JOURNAL

# स्वर-मङ्गला

## ( त्रैमासिकी संस्कृत-शोधपत्रिका )

वर्ष : 47 अप्रेल-जून, 2022 अङ्क : 2

प्रधानसम्पादकः

**विकास सीताराम जी भाले,** I.A.S.

प्रशासकः, राजस्थान-संस्कृत-अकादमी, जयपुरम्

प्रबन्धसम्पादकः

**सञ्जय झालाः**

निदेशकः, राजस्थान-संस्कृत-अकादमी, जयपुरम्

सम्पादकः

**आचार्यः ( डॉ. ) श्रीकृष्णशर्मा**

संस्कृतविभागाध्यक्षचरः, जयनारायणव्यासश्विविद्यालयः, जोधपुरम्

म. म. गिरिधरशर्मा चतुर्वेदी-व्याकरणपीठाध्यक्षचरश्च,

जगद्गुरु-रामानन्दाचार्य-राजस्थानसंस्कृतविश्वविद्यालयः, जयपुरम्



**राजस्थान-संस्कृत-अकादमी**

जे-15, अकादमीसङ्कुलम्, झालानासांस्थानिकक्षेत्रम्, झालानाडूंगरी, जयपुरम् (राजस्थानम्)

दूरभाषाङ्काः 0141-2709120, E-mail :- rajasthansanskritacademy@gmail.com

**रजि. संख्या RM 26065/72**

# स्वर-मङ्गला

**प्रकाशनम्**

अप्रेल-जून, 2022

**प्रधानसम्पादकः**

विकास सीताराम जी भाले, I.A.S.

**प्रबन्धसम्पादकः**

सञ्जय झालाः

**सम्पादकः**

आचार्यः (डॉ.) श्रीकृष्णशर्मा

वार्षिकमूल्यम् : शतम् रूप्यकाणि (100.00)

सैषा प्रतिः पञ्चविंशती रूप्यकाणि (25.00)

आजीवनमूल्यम् : सहस्रम् रूप्यकाणि (1000.00)

**सङ्गणक - टङ्कक :** अक्षिता कम्प्यूटर्स, जयपुर, दूरध्वनि : 9928895708

**मुद्रक :** राजस्थान-राज्य-सहकारी-मुद्रणालयः लि., जयपुरम्।

# विषयानुक्रमणिका


1. सम्पादकीयम्

प्रोफेसर श्रीकृष्णशर्मा 5–7

2. वाचस्पतेः कीर्त्तिकौमुदी

प्रोफेसर रामजीठाकुरः 6–14

3. दर्शनानुसारं शिक्षक–शिक्षार्थी–संकल्पना

डॉ. रेखा शर्मा 15–18

4. आध्यात्मिकग़ज़लगीतिः

डॉ. हर्षदेवमाधवः 19–20

5. कुमारसम्भवस्य पञ्चमे सर्गे नारीस्थितिः

प्रोफेसर मङ्गलारामः 21–26

6. संस्कृतसाहित्ये पाककला

डॉ. मधुबाला शर्मा 27–33

7. गुग्गुलस्य औषधीयगुणाः

डॉ. नन्दिता सिंघवी 34–37

8. 'शतवार्षिकम्' प्रहसनम् : एकमनुशीलनम्

डॉ. सरोजः 38–43

9. वेदस्याध्ययने निरुक्तस्य महत्ता

डॉ. उषाकिरणयादवः 44–49

10. श्रीमद्भगवद्गीताया गीताभूषणभाष्यानुसारं योगिनः स्वरूपम्

डॉ. अञ्जना शर्मा 50–57

| | | |
|---|---|---|
| 11. | **शकुनानां प्रभावक्षेत्राणि तच्छान्त्युपायाश्च** | |
| | डॉ. जितेन्द्रकुमारगौतमः | 58–61 |
| 12. | **व्याकरणशिक्षणे पुष्पादीक्षितायाः नवीनपद्धतिः** | |
| | डॉ. हरीशकुमारवर्मा | 62–66 |
| 13. | **वैदिकवाङ्मये लोकजीवनम्** | |
| | डॉ. रामेश्वरप्रसादगुप्तः | 67–70 |
| 14. | **वेदेषु ज्योतिषवास्तुशास्त्रादिविषयाणां सङ्केतः** | |
| | नितिनकुमारढण्ढः | 71–74 |




वर्ष : 47 अङ्क : 2 स्वरमङ्गला
अप्रेल-जून, 2022 ISSN-2249-9296

# सम्पादकीयम्

## नाभिद्रुह्येत् गुरुं किल

**प्रोफेसर श्रीकृष्णशर्मा**

'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति गीतोक्त्याऽस्मिन् संसारे ज्ञानस्यातिशयमहत्त्वमुपवर्णितम्। अतो **निरुक्तकारो** महर्षिर्यास्काचार्योऽज्ञाननिन्दामथ च ज्ञानप्रशंसां विदधाति। तथा हि-

**स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।**
**योऽर्थज्ञ इत्सकलं भद्रमश्नुते नामकेति ज्ञानविधूतपाप्मा।।**

अर्थाद् यो विद्यार्थी वेदशास्त्रादिकन्तु अधीते, आचार्यमुखात् शृणोति, कण्ठस्थीकरोति वा, परन्तस्य शब्दस्यार्थं न गृह्णाति। अर्थज्ञानं विनैव ग्रन्थमात्रमधीते यः स शब्दानां भारं तथैव वहति यथा स्थाणुर्वृक्षः स्वीयानि पत्र-पुष्प-फलानि धारयत्येव, नहि तद्गत- रूप-रस-गन्ध- स्पर्शाद्युपभोगसुखं लभते। अथ च योऽर्थज्ञानपूर्वकं शब्दमधीते, न केवलं ग्रन्थमात्रमधीते, सोऽखण्डं योगक्षेमात्मकं कल्याणं प्राप्नोति। ज्ञानेन तस्याध्येतुः सकलं पापम् अपगतं भवति, येन च सोऽपगतकल्मषः पवित्रः सन् न केवलं लोके प्रतिष्ठितम्भवति, अपितु स्वर्गलोकमवाप्नोति। एतदाशयेनैव महाभाष्यकारेण 'एकः पूर्वपरयोः' (6.1.83) इति सूत्रभाष्ये सम्यगेवोक्तम्- '**एकः शब्दः सम्यग्ज्ञातः सुष्ठु प्रयुक्तः स्वर्गे लोके कामधुग्भवती**'ति। अत्र शब्दस्यार्थज्ञानपूर्वकशब्दप्रयोग एव धर्म इत्युपदिष्टम्। परिज्ञानेनैव लोकोऽभ्युदयेन श्रेयसा च युनक्तीत्याशयः।

योऽर्थज्ञः स ज्ञानेन विधूतपाप्मा = पुण्यवान् भवतीत्युक्तं पूर्वम्। यश्चार्थज्ञानम् अनवबुध्य शब्दमात्रं रटनप्रक्रियया कण्ठाभूषणं करोति, शब्दे निहितम् अर्थं न जानाति स निरग्नि-शुष्ककाष्ठवद् असमर्थो भवति। यथा शुष्ककाष्ठे प्रज्वलन-प्रकाशनसामर्थ्यं तु भवति, परमेतदर्थम् अग्नेः सम्पर्क आवश्यकः, अग्निं विना शुष्कमपि काष्ठं न प्रकाशते, तथैव शब्दे ऽखिलं जगत्-प्रकाशकं ज्योतिष्तु भवति परमर्थज्ञानं विना न तदाविर्भवति। यथोक्तं **निरुक्तकृता**-

**यद्गृहीतमविज्ञातं निगदेनैव शब्द्यते।**
**अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्।। इति।**

उपर्युक्त-विवरणेन ज्ञानं प्रशस्तम्, अज्ञानञ्च निन्दितम्। ज्ञानेन अज्ञानं निवर्त्यते। तच्च सामर्थ्यं गुरोराशीर्वादेनैव प्राप्तुम् अर्ह्यते। अतश्चोक्तम्-

**अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया।**

**चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः।।**

तुदादिगणीय- 'गॄ' निगरणे- इत्यस्याद्धातोः 'कृग्रोरुच्च' इत्युणादिसूत्रेण 'उ' प्रत्यये, उकारान्तादेशे, 'उरण् रपरः' इति रपरत्वे च '**गुरु**' शब्दो निष्पद्यते। 'गिरति = अज्ञानं नाशयती'ति व्युत्पत्तौ च '**गुरुः**'। गुरुरेव अज्ञानान्धकारं ज्ञानप्रकाशेन निरस्य ज्ञान-विनय-संस्कार-सदाचारादिगुणान् नैपुण्येन शिष्येषु संक्रामयति।

उपर्युक्त-मानवीयगुणैरेव पश्वादिप्राणिभ्यः किमपि वैशिष्ट्यं भजतेतराम् शिष्यः। अतश्चोक्तं भर्तृहरिणा-

**'ज्ञानं हि तेषामधिको विशेषः' इति।**

यो यं कमपि यत्किञ्चिदपि सज्ज्ञानं प्रदाय स्तोकमधिकं वा उपकरोति, तमपि ज्ञानदातृत्वरूपोपकारकारणात् गुरुं विज्ञानीयात्। उक्तञ्चैतद् **मनुना** (मनुस्मृतिः 2.149)

**अल्पं वा बहु वा यस्य श्रुतस्योपकरोति यः।**

**तमपीह गुरुं विद्यात् श्रुतोपक्रियया तया।। इति।**

अपि चान्यत्र लघुहारीतोक्तम्-

**एकमप्यक्षरं यस्तु गुरुः शिष्ये निवेदयेत्।**

**पृथिव्यां नास्ति तद् द्रव्यं यद् दत्त्वा चानृणी भवेत्।। इति।**

अतः संसार-सागरं तर्तुं सद्गुरुप्रदत्ता ज्ञानतरणिरावश्यकी। एतदर्थं = गुरोर्ज्ञानाधिगमाय शिष्योऽपि श्रद्धावान् भवेत्, गुरुं मातरं पितरञ्च जानीयात्, अथ च तस्मै माता-पितृतुल्याय गुरवे कदाचिदपि न द्रुह्येत्।

विद्याया अभिशापोऽयं भवति यद् येऽध्यापिताः शिष्याः गुरुं प्रति यदि नाद्रियन्ते ते समधीतविद्या अपि गुरोः कृपापात्राणि न भवन्ति, अधिगतज्ञानमपि न तान् दुष्टशिष्यान् रक्षति। यथाकालं सर्वं ज्ञानं तेषां विलुप्तं भवतीत्याशयः। अतः समर्पणबुद्ध्या आर्जवभावेन च संसेवनीयाः सद्गुरुरवः। गुरोर्महिमा वर्णनातीतः। नास्ति तत्त्वं गुरोः परमिति शम्।

**आवास-संकेतः**
75, राजमार्गः,
छत्रशालनगरम्,
मालवीयनगरम्
जयपुरम्, 302017

**सम्पादकः**
आचार्योऽध्यक्षचरः, संस्कृतविभागः,
जयनारायणव्यासविश्वविद्यालयः, जोधपुरम्।
म. म. गिरधरशर्मा चतुर्वेदी-व्याकरणपीठाध्यक्षचरश्च
जगद्गुरु-रामानन्दाचार्य-राजस्थान-संस्कृतविश्वविद्यालयः,
जयपुरम्। दूरभाषः 8386943655



वर्ष : 47 अङ्क : 2
अप्रेल–जून, 2022

स्वरमङ्गला
ISSN-2249-9296

# वाचस्पतेः कीर्त्तिकौमुदी

**प्रोफेसर रामजीठाकुरः**
राष्ट्रपतिपुरस्कृतः

**अशेषदर्शनारण्य-स्वच्छन्दगतिचारिणम्,**
**दृप्तनास्तिक-नागेन्द्र-द्रावकं सिंहमद्भुतम्।**
**विद्यावैदुष्यविख्यातं मैथिलं सर्वगौरवम्,**
**वाचस्पतिमिव प्राज्ञं वन्दे वाचस्पतिं गुरुम्।।**

श्रीमज्जानकी जन्मपरिपूतेयं मिथिलावनी शिक्षा-साहित्य-धर्मदर्शनप्रभृतीनां भारतीयश्रौतविद्यास्थानानां आदिकालादेव प्रधानकेन्द्रतया प्रसिद्धिमागतास्ति। राज्ञो विदेहजनकस्य राजसभा ब्रह्मविद्यायाः क्रीडाभूमिरभूत्। अध्यात्मवादस्य ब्रह्मवादस्य वा विकासः उपनिषद्युगस्य वैशिष्ट्यमुच्यते। हिन्दुधर्मस्य दार्शनिकविश्लेषणं वेदान्ते-उपनिषद्वाङ्मये समवलोक्यतेतराम्। उपनिषदां विशिष्टभागस्य मीमांसा जनकराजसंसद्येव समजायत। तत्त्वमसीति, महावाक्यं पावनभूमावस्यामेव प्रास्फुटत्। जनकस्यैव ब्रह्मसभायां ब्रह्मविदा अष्टावक्रेण महागीता समगीयता न्यायसूत्रकारो महिर्षिगौतमोऽत्रैव जनिमलभत। गौतमस्यापरं-नाम अक्षपाद इति चीनियात्रि-विवरणे विलोक्यते। योगीन्द्रयाज्ञवल्क्यस्य जीवनचरित्रमेव मिथिलायाः सांस्कृतिकमैतिहासिकञ्च पावनमुदात्तं चित्रं प्रस्तौति। इयञ्च पावनी भूरनेकान् प्रज्ञापुरुषानजीजनत्। वेदवती-गार्गी-मैत्रेयी प्रभृतीनिनारीरत्नानि प्रादुरबीभवत्। मिथिलामहिमानं प्रकाशयता बंगकविना कर्णपूरेण सत्यमिदमभिहितमस्ति-

**यत्र विज्ञवदनेषु दर्पिता नृत्यति प्रतिगृहं सरस्वती।** इति।।

समुत्थिते च सौगतमते मिथिलाया अपि श्रौत-संस्कृतिः किञ्चिदाहतेव समजायत। परमयमाघातः तस्याः सैद्धान्तिकविजयवरदानाय समकल्पत। तर्कप्रसवभूमिरियं मिथिला बौद्धविदुषां कुतर्कजालान्युच्छेत्तुं विश्वविश्रुतान् प्रज्ञापुरुषान् जनयामास, ये सत्तर्कैः नास्तिकसिद्धान्तान् निरस्य पुनर्वैदिकी-परम्परां प्रत्यतिष्ठिपन्। एवं-विधविदुषामुल्लेखावसरेप्रथमतया **महिषी**ग्राममधिष्ठितवतः मिथिलायाः प्रसिद्धमीमांसकस्य **मण्डनमिश्रस्य** नाम ग्रहीतुं शक्यते। श्रूयतेऽस्य द्वारि ''स्वतः प्रमाणं परतः प्रमाण'' मिति गिरः कीराङ्गना अपि सङ्गिरन्तिस्म। परम्परानुसारेण श्रीशङ्कराचार्योऽपि तेन सह शास्त्रचर्चां कर्त्तुं मिथिलामाजगामेति। केचन मैथिलाश्चिन्तकाः शङ्करमण्डनयोः शास्त्रार्थवार्तामलीकां मन्यन्ते। एतदेव मतं गोपीनाथ कविराज महाशयेनापि प्रकाशितमस्ति। शङ्कराचार्यस्य वैदुष्ययशः

समुत्कर्षप्रदर्शनाय केनापि सन्यासिना शङ्करदिग्विजय-नामा ग्रन्थः प्रणीतः यत्र मण्डनपराजयकथा प्रकल्पिता। अन्यथोभयोः कालभेदात् सङ्गतिरसम्भवैव। मण्डनमिश्रः पूर्वमीमांसायां भावविवेकं, विधिविवेकञ्च, वेदान्ते ब्रह्मसिद्धि नामकं ग्रन्थं व्यरीचरत्। मण्डनमिश्रात् परं मिथिलाविभूतिः सर्वदर्शनारण्यकेसरी, सर्वतन्त्रः स्वतन्त्रः सर्वदर्शनटीकाकारतया सुविख्यातनामा **वाचस्पतिरेव** उल्लेखनीयतामर्हति। अयं मण्डनमिश्रस्य विधिविवेकोपरि **न्यायकणिका**नाम्नीं टीकां प्राणैषीत्। वेदान्ते ब्रह्मतत्त्वसमीक्षां ब्रह्मसूत्रशाङ्करभाष्य-व्याख्यानरूपां भामतीञ्च निरमासीत्। ईश्वरकृष्णकृत-सांख्यकारिकाया व्याख्याभूतां सांख्यतत्त्वकौमुदीं- पातञ्जलयोगसूत्रोपरि तत्त्ववैशारदी-नाम्नीं-टीकाञ्च व्यरचयत्। न्यायशास्त्रमधिकृत्य, न्यायवार्त्तिकतात्पर्यटीकां, तत्त्वबिन्दुर्न्यायसूचीनिबन्धौ च न्यबध्नात्। एवमस्य सर्वास्तिकदर्शनशाखासु समानतया व्यापृता लेखनीविद्वत्समाजे परां प्रसिद्धिमवाप्नोत्। न्यायसूचीनिबन्धरचनाकालोऽनेन स्फुटं निर्दिष्टोऽस्ति-

**न्यायसूची निबन्धोऽसावकारि सुधियां मुदे।**
**श्रीवाचस्पतिमिश्रेण वस्वङ्क वसुवत्सरे।।**

(दुर्गाधरझाकृत मैथिली सांख्यशास्त्रभूमिका, पृ. घ)।

एतेन नवम-शताब्दस्य चरमः संवत् कालोऽस्य निर्धारितः।

पुरास्तिकनास्तिकानां वादसङ्गरे संप्रवृत्ते पण्डितमार्तण्डो वाचस्पतिः आस्तिकसिद्धान्तस्थापने प्रमुखसैनापत्यं निर्वहन् नास्तिकान् सर्वान् पराभूतवान्। गौतमस्य न्यायसूत्रग्रन्थे बौद्धाचार्यो नागार्जुनः कतिपयान् दोषान् उदघाटयत्। वात्स्यायनो भाष्यकारः तांश्च दोषान् समाधात्। पुनर्दिङ्नागाचार्यः वात्स्यायनकृतदोषसमाधाने काश्चित् त्रुटीरदर्शयत्। न्यायवर्तिककृतोद्द्योतकरेण तर्कैस्ताश्च त्रुट्यः परिमार्जिताः। पुनश्च धर्मकीर्त्तिनामा बौद्धभिक्षुः स्वनिर्मिते न्यायबिन्दुनाम्नि ग्रन्थे उद्द्योतकरकृतसमाधानमदूषयत्। बौद्धो विद्वान् धर्मोत्तरश्च न्यायबिन्दुग्रन्थोपरि टीकामारच्य दिङ्नाग-धर्मकीर्त्तियुक्तीनां समर्थनमकार्षीत्।

एवं बौद्धानां वाचोयुक्त्या विपन्ने चास्तिकमते वैदुष्यवीरो वाचस्पतिः उद्द्योतकरस्य न्यायवार्तिकोपरि तात्पर्यनाम्नीं टीकां विरच्य बौद्धाक्षेपान् प्रक्षिपन् कुनिबन्धपङ्कमग्नामुद्द्योतकरगवीमुद्दधार। यथोक्तं तेनैव-

**इच्छामि किमपि पुण्यं दुस्तरकुनिबन्धपङ्कमग्नानाम्।**
**उद्द्योतकरगवीनामतिजरतीनां समुद्धरणात्।। इति।**

मिथिलासुपुत्रोऽयं महान् मनस्वीवाचस्पतिः साम्प्रतिकमधुबनी-मण्डलस्य अन्धराठाढीति प्रसिद्धं ग्राममध्यवसत्। अतएव तत्रत्यरेलयानस्थानस्य, वाचस्पतिनगरमित्याख्या कृतास्ति। अयं सर्वेषु दार्शनिकप्रस्थानेषुतुल्यरूपां श्रद्धां दधत् सांख्यसिद्धान्तसमर्थक इव सांख्यकारिकोपरि सांख्यतत्त्वकौमुदीं, वेदान्तपथपथिक इव ब्रह्मसूत्रशाङ्करभाष्यव्याख्यां भामतीं, न्यायनिष्ठितमतिरिवन्यायवार्तिकोपरि तात्पर्यटीकां, योगाचार्य इव पातञ्जलयोगसूत्रव्याख्यां तत्त्ववैशारदीं च विरच्य अन्वर्थां षड्दर्शनवल्लभ इत्युपाख्यामधत्त। मिथिलायां भवनाथात्मजः शङ्करः स्वनामधन्यो वाचस्पतिश्च स्ववैदुष्यवैभवेन अद्वितीयाविव संस्मृतौ स्तः-

**शङ्कर-वाचस्पत्योः शङ्करवाचस्पती-सदृशौ।**

निबन्धेऽस्मिन् विद्यागुरोर्वाचस्पतेः सांख्यतत्त्वकौमुदीगतान् काँश्चिद् विषयानाधृत्य तदीयव्याख्यानपाटवं निरीक्षितुं यथामति प्रयत्नो विधीयते। ईश्वरकृष्णः सप्ततिकारिकोपेतां सांख्यशास्त्रप्रतिपादिकां सांख्यकारिकां प्राणैषीत्।

अस्मिन् ग्रन्थे गौडपादभाष्यं माठरवृत्तिश्चेति प्राचीनं व्याख्यानद्वयं सुप्रसिद्धमस्ति। तत्रभवान् वाचस्पतिरप्यत्र सांख्यतत्त्वकौमुदीनाम्नीं टीकां निर्मितवान्। सांख्यकारिकाणां विशदतमा सद्युक्तिपरिलक्षिता सांख्यतत्त्वकौमुदी- नामटीका सविशेषं विदुषां मनोहारिणी विद्यते। सांख्यतत्त्वव्याख्यानेऽस्मिन् न्यायवार्तिकटीकादाविव विस्तरः खण्डन-मण्डन बाहुल्यं, गद्यप्राञ्जलता कायवैपुल्यञ्च विलोकयितुं न शक्यन्ते। एतट्टीकावलोकनेन स्पष्टमिदं प्रतीयते यदत्र वाचस्पतिर्विस्तरावसरेऽपि ग्रन्थसंक्षेपं प्रति स्वरुचिं प्रकाशयति। अन्यत्र वा सविस्तरं-विचारितो विषयः ग्रन्थकृतात्र समासेन विचार्यते।

सांख्यतत्त्वकौमुद्यामनुमानप्रकारान् दर्शयन्नयमाहस्म-

**सर्वं चैतदस्माभिर्न्यायवर्त्तिक-तात्पर्यटीकायां ( 1.1.5 ) व्युत्पादितम्।** इति नेहोक्तं विस्तरभयात्। (सां. का. पञ्चमकारिकाव्याख्या, पृ. 37 चि. चू. प. विश्वेश्वर दयालुवैद्यराज. सं. दीपिकोपेता)।

एवमेव दृष्टप्रमाणनिरूपणावसरेऽनेन स्वकीयसंक्षेपप्रवृत्तिः प्रकाश्यते- ''तन्त्रान्तरे लक्षणान्तराणि तैर्थिकानां न दूषितानि विस्तरभयादिति।'' किन्तु संक्षिप्तायामपि सांख्यतत्त्वव्याख्यायामस्यां वाचस्पतेर्विशिष्टा शैली सर्वत्र परिलक्ष्यते। तत्तच्छास्त्रमर्मोद्घाटनेऽपूर्वं प्रतिभानं विलक्षणा वाचो युक्तिः, विशिष्टा वचनभङ्गी पदे-पदे चमत्कारोति चेतः सुधियाम्।

भारते सर्वतः प्राचीनतमं **वेदान्तदर्शनं सांख्यशास्त्रमेव** मन्यते। पुराणेषु महाभारते च सांख्यतत्त्वानि वर्णितानि दृश्यन्ते। गीतायां सांख्ययोगयोः साम्यं प्रतिपादितमस्ति- ''सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः।'' सांख्यदर्शनमिदं संख्यामधिकृत्य प्रवृत्तं शास्त्रं विद्यते। सदसद्विवेकशालिनी बुद्धिः सत्त्वपुरुषान्यताख्यातिर्वा संख्येति कथ्यते। अतएव संख्यावान् पण्डितपर्यायत्वेन प्रयुज्यते। शास्त्रेऽस्मिन् प्रकृतिपुरुषविवेक एव तत्त्वज्ञानं मन्यते। अनेन च विवेकेन पुरुषः प्रकृतेरात्मनः पार्थक्यं विज्ञाय दुःखभयान्मुक्तिं लब्धुमीष्टे। दुःखविमुक्तये निरतिशयसुखावाप्तये वा सर्वाणि दर्शनशास्त्राणि प्रवृत्तानि सन्ति-

इह जगति हि सर्व एव जन्तुर्निरतिशयं सुखमुत्तमं ममास्तु। व्युपरमतु तथोपघातरूपं विषयजदुःखमिति स्पृहां करोति।' (द्रष्टव्या वेदान्तपरिभाषाभूमिका. पृ.-1)। सांख्यदर्शने सुखोल्लेखस्तु न दृश्यते, किन्तु त्रिविधदुःखाभिघात व्याकुलचेतसां जनानां कृते ऐकान्तिकात्यन्तिकदुखनिवारणोपायः स्पष्टमुल्लिखितोऽस्ति। ऐकान्तिक आत्यन्तिकदुःख निरासश्च न लौकिकेन नापि वैदिकेनोपायेन कर्तुं शक्यते। स च व्यक्ताव्यक्तज्ञविज्ञानादेव संभवति- दृष्टवदानुश्रविकः सह्यविशुद्धिक्षयातिशययुक्तः। तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञविज्ञानात्।। (का. सं. 2)। अतः सांख्योक्तदुःख-निवारणोपाये जिज्ञासा सुतरामपेक्षिता-

**दुःखत्रयाभिधाताज्जिज्ञासा तदभिघातके हेतौ।**
**दृष्टे साऽपार्था चेन्नैकान्तात्यन्ततोऽभवात्।।** (सां. का.-1)

इहास्तिकानां शास्त्रारम्भे मङ्गलाचरणस्य सुदीर्घपरम्परा दृष्टिपथमवतरति, परन्त्वस्यां प्रथमकारिकायां दुःखस्यानिष्टस्य प्राथम्येनोपादानात् अमङ्गलाचरणात् शिष्टाचारोल्लंघनं कथमाचरितमीश्वरकृष्णेनेति-शङ्कामुत्थाप्य कौमुदीकृद्वाचस्पतिः समाधानं प्रस्तुवन् आह-सदपि दुःखममङ्गलं स्वपरिहाराय प्रथमतया प्रयुक्तत्वात् मङ्गलायैव सम्पद्यते। यदुक्तमाचार्येण कौमुदीकृता-। यद्यपि दुःखममङ्गलं, तथापि तत्परिहारार्थत्वेन तदवघातो मङ्गलमेवेति युक्तं शास्त्रादौ तत्कीर्त्तनमिति।' (सां. प्रथमकारिकाव्याख्या)

दार्शनिकानां प्रमाणसंख्याविषये नैकमत्यमवलोक्यते। लोकायतमतप्रवर्तकश्चार्वाक: एकं प्रत्यक्षमेव प्रमाण मङ्गीकरोति। बौद्धा वैशेषिकाश्च प्रत्यक्षमनुमानञ्चेति प्रमाणयुगलं स्वीकुर्वन्ति। नैयायिका: प्रमाणचतुष्टयं मन्यन्ते- प्रत्यक्षानुमानोपमानशब्दा: इति। प्राभाकरा मीमांसका: प्रमाणेषु पञ्चमीमर्थापत्तिमपि निवेशयन्ति। भाट्टमीमांसका वेदान्तिनश्च अभावमनुपलब्धिं वा षष्ठं प्रमाणमभ्युपगच्छन्ति। पौराणिका: एभि: प्रमाणै: सह सम्भवमैतिह्यञ्चेति प्रमाणद्वयं मन्यन्ते। किन्तु सांख्याचार्या: प्रत्यक्षमनुमानमाप्तवचनञ्चेति प्रमाणत्रयमभ्युपगच्छन्ति ''त्रिविधं प्रमाणमिष्टम्'' (सां. का. 4)

लौकायतिकोऽनुमानमपि प्रमाणं न स्वीकरोति। स इन्द्रियग्राह्यामेव वस्तुसत्तां स्वीकरोति। तन्मतेन पर्वते चक्षुर्गोचरस्य धूमस्यैव सत्ता मन्तव्या। धूमं दृष्ट्वापि अदृश्यमानस्य वह्ने: सत्ता संदिग्धतया न प्रामाणिकी। धूममवलोक्य वह्निप्रयोजनेन महानसं प्रति धावन्तो जना: साफल्यमप्यधिगच्छन्ति। परं तत् संभावनामात्रम्। व्याप्तेर्दुर्ग्रहत्वात् नानुमानं यथार्थज्ञानं प्रदातुं शक्नोति। अस्यां संभावनायामेव प्रामाण्यभ्रान्तिर्जायते। ''**अलिविलासिसंलाप**'' नाम्नि स्वखण्डकाव्ये लोकायतमतं वर्णयता गङ्गाधरशास्त्रिणा कथ्यते-

**प्रमितिरक्षभवैव मतिर्मताऽवनिजलानलवायुषु तत्त्वता।**

**नरक-नाकज-दु:ख-सुखे ध्रुवं, निशितकण्टक-सप्रणयाङ्गने।।**

(अ. वि. सं., द्वि. श., श्लो. 23)

सांख्याभिमतमनुमानं निरूपयन् वाचस्पति: स्वयुक्तिकौशलेन चार्वाकेणाप्यनुमानं बलात् स्वीकारयति। तेनोच्यते अनुमानमप्रमाणमिति तथ्यं प्रति अज्ञ: संदिग्धो विपर्यस्तो वा तथ्यमेतद्बोध्येत। अज्ञं संदिग्धं भ्रान्तं वा परिचेतुं तद्गतमज्ञानं, सन्देहो भ्रान्तिर्वा ध्रुवं प्रत्येतव्या। तद्गतासाधारणधर्मज्ञानमन्तरेण तद्धर्मिणो ज्ञानं दु:साध्यम्। परमयमज्ञानादिरूपो धर्म: सर्वथाऽतीन्द्रिय: अनुमानमन्तरेण कथं बोध्येत। व्यक्तिविशेषस्य अज्ञानादिको धर्म:, अभिप्रायभेदकेन वचनभेदहेतुकेनानुमानेनैव बोद्धुं पार्येत। अज्ञसंदिग्धविपर्यस्तानां वाक्यानि श्रुत्वा तद्गता अज्ञानादयो धर्मा अनुमीयन्ते। उपदेश्यगतान् अज्ञानादिधर्मानज्ञात्वा अनुमानमप्रमाणमित्युपदिशन् चार्वाक इवोपदेशक: विद्वद्भिरुन्मत्त इवोपेक्ष्येत। तस्मात् चार्वाकेणापि अनुमानं नूनमभ्युपेतव्यम्। यदुच्यते **कौमुदीकृता** वाचस्पतिना- ''नानुमानं प्रमाणमिति वदता लौकायतिकेन अप्रतिपन्न: संदिग्धो विपर्यस्तो वा पुरुष: कथं प्रतिपद्येत। न च पुरुषान्तरगताज्ञानसन्देह-विपर्यया: शक्या अर्वाग्दृशा प्रत्यक्षेण प्रतिपत्तुम्, नापि प्रमाणान्तरेण अनभ्युपगमात्..... तदनेन अज्ञानादय: परपुरुषवर्तिन: अभिप्रायभेदात् वचनभेदात् वा लिङ्गादनुमातव्या:, इत्यकामेनाप्यनुमानं प्रमाणमभ्युपेयम्।'' (सां. त. कौ., पृ. 26)

शास्त्रकृतां संक्षिप्तायामुक्तौ विषयसन्निवेशस्य शास्त्रार्थालोचनस्य क्रमो नियमो वा तिरोहित इव सन्तिष्ठते। यथा कोऽपि सहृदय: काव्यमर्मावधारयितुं प्रकाशयितुञ्च पारयति, तथा शास्त्रार्थभावनाभावितधीरेव परिपक्वमति: कोऽपि टीकाकार: शास्त्रकृदाशयं सम्यक् प्रकाशयितुमीष्टे। तुरीयाया: सांख्यकारिकाया व्याख्यायां वाचस्पतेर्व्याख्यानकौशलमिदं स्फुटमवलोक्यते। त्रिविधप्रमाणनिरूपणपरेयं कारिकास्ति-

**दृष्टमनुमानमाप्तवचनं च सर्वप्रमाणसिद्धत्वात्।**

**त्रिविधं प्रमाणमिष्टं, प्रमेयसिद्धि: प्रमाणाद्धि।।**

नहि वस्तुन: सामान्यज्ञानमन्तरेण तद्विशेषज्ञानं संभवति। किन्तु कारिकायामस्यां प्रमाणसामान्यनिरूपणं विनैव प्रमाणविशेषाणामुल्लेख: ''दृष्टमनुमानमाप्तवचनञ्चेति' कृतो दृश्यते। एतच्छंकापनोदाय वाचस्पति: कारिका-

तृतीयचरणगतं ''प्रमाणमिष्ट' मिति वाक्यं प्रमाणसामान्यलक्षणबोधकं स्वीकुरुते। प्रमीयतेऽनेनेति व्युत्पत्त्या प्रमायाः करणं प्रमाणमिति सिद्धं प्रमाणसामान्यलक्षणम्।

यद्यपि लक्षणबोधकवाक्ये लक्ष्यबोधकस्यापि पदस्योपादानेन भवितव्यम्। यथा- गन्धवती पृथिवी इति। यद्यप्येकमेव प्रमाणपदं लक्ष्यं लक्षणञ्चेत्युभे बोधयितुमीष्टे। किन्तु तत् शाब्दिकसिद्धान्तप्रतिकूलमिव प्रतिभाति। सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति इति शाब्दिकानां समयः। अत्र समाधानं प्रस्तुवता वाचस्पतिनोच्यते कारिकागतं प्रमाणपदं तन्त्रोच्चरितं स्वीकर्त्तव्यम्। अनेकार्थबोधनेच्छया एकशब्दोच्चारणं **तन्त्रः।** अत्र शब्दवृत्त्या बोद्धा सकृदुच्चरितस्यापि शब्दस्य अर्थद्वयं प्रतिपद्यते। एवमिहापि एकमेव प्रमाणपदं लक्ष्यपरं लक्षणपरञ्चेति निर्बाधं स्वीक्रियेत। यदुक्तं **कौमुद्याम्**- ''अत्र प्रमाणमिति समाख्या लक्ष्यपदं तन्निर्वचनञ्च लक्षणम्। प्रमीयतेऽनेनेति प्रमां प्रति करणत्वमवगम्यते।'' (तत्रैव. पृ. 20)

उपर्युक्तकारिकायां प्रमाणसंख्याविषयिणीं विप्रतिपत्तिं निराकर्तुं 'त्रिविध' मित्युक्तम्।

न न्यूनं नाप्यधिकम्। तानि च प्रमाणानि सन्ति दृष्टम् प्रत्यक्षम्, अनुमानम्, आप्तवचनञ्चेति। एवं प्रमाणत्रैविध्यं प्रतिपाद्य कौमुदीकृतोच्यते, यद्यपि आर्षमपि विज्ञानं प्रमाणत्वेन स्वीकार्यम्, येन विप्रकृष्टं, व्यवहितम्, अतीतमनागतञ्च सर्वं वस्तु प्रत्येतुं शक्यते। परं तदलौकिकं प्रमाणमस्ति। लोकव्युत्पादनार्थं शास्त्रमारभ्यते। आर्षञ्च विज्ञानं न सर्वलोकोपयोगि। तस्मात् लौकिकमेव प्रमाणत्रयमत्र दर्शितमस्ति। एवमियमार्या पाठक्रममनादृत्य अर्थक्रमानुरोधेन व्याख्यातास्ति।

त्रिषु दृष्टानुमानाप्तवचनेषु तदितर-प्रमाणान्यन्तर्भावयतो वाचस्पतेर्युक्तिनैपुण्यस्य सुतरां परिचयः सञ्जायते। ''प्रसिद्धसाधर्म्यात्-साध्यसाधनमुपमानम्'' (न्या. सू. 1/1/5) इति-गौतमीयसूत्रानुयायिनामनुसारेण कोऽपि कमपि पृष्टवान् कस्तावद् गवयपदार्थ इति। स चोत्तरं प्रायच्छत्'गोसदृशो गवय इति।' इहाप्रसिद्धो गवयपदार्थः प्रसिद्धगोबोधकेन येन वाक्येन बोध्यते, तद् गोसदृशो गवय इति वाक्यमेवोपमानप्रमाणमुच्यते। अत्र वाचस्पतेर्वाचोयुक्तिरस्तियदोपमितिरूपा उक्तप्रमितिः वाक्यरूपशब्दजन्यैव तदोपमानप्रमाणस्य शब्दप्रमाण एवान्तर्भावः सुतरां संभवति। प्रशस्तपादभाष्येऽपि एवमेवोपमानप्रामाण्यं निरस्तमस्ति।

अत्र न्यायवार्त्तिककृदुद्द्योयोतकरः भिन्नमेवाभिप्रायं प्रकाशयति। तदनुसारेण कोऽपि कुतश्चिदभिज्ञलोकात् ''गवयो गोसदृशो भवति'' इति श्रुत्वा केनापि कारणेन वनं गतः गो-सदृशमेकं वस्तुविशेषमद्राक्षीत्। तं दृष्ट्वा श्रुतपूर्वं गोसदृशो गवय इति वाक्यमस्मरत्। वाक्यस्मरणेन च प्रत्यक्षं दृश्यमानः गोसदृशवस्तुविशेषः गवयपदार्थ इति प्रतिपद्यते। तदनुसारेण गवयपदगतशक्तिज्ञानमेव उपमितिरिति पर्यवस्यति। सादृश्यस्मरणं तद्बोधकं वाक्यं वा उपमानप्रमाणं सिध्यति। किन्तु इदमपि गवयगतशक्तिज्ञानमनुमानसिद्धम्। गवयशब्दः गोसदृशवस्तुविशेषवाचकः वृद्धजनप्रयुक्तत्वात्। वृद्धाः अभिधया लक्षणादिवृत्त्यभावे अभिधाभ्रभाभावेऽपि गोसदृशरूपार्थे गवयशब्दं प्रयुञ्जाना दृश्यन्ते। लक्षणादिवृत्त्य-भावेऽपि अभिधाभ्रमाभावेऽपि च यस्मात् शब्दात् यस्यार्थस्य प्रतिपत्तिर्भवति सोऽर्थस्तच्छब्दवाच्यो भवति। स शब्दश्च तदर्थवाचकः, इति सुग्रहा व्याप्तिः।

**मीमांसका** उपमानमन्यथा व्याचक्षते। तदनुसारेण कश्चिज्जनो नगरे गां दृष्ट्वाऽरण्यं गतः गवयमपश्यत्। ततः प्रत्यक्षदृष्टगवयसादृश्यबुद्धिः दृष्टपूर्वायां गवि सञ्जायते, मम गौरपि एतादृशीति। अतो गवयनिष्ठं गोसादृश्यज्ञान-मुपमानम्। गोनिष्ठं गवयसादृश्यज्ञानञ्चोपमितिः। परमियमुपमितिः प्रत्यक्षप्रमाणसिद्धैवास्ति। गवयनिष्ठं गोसादृश्यं

गोनिष्ठं च गवयसादृश्यं न भिन्नं वस्तु। मीमांसका: सादृश्यं जातिसदृशमेव धर्मविशेषं स्वीकुर्वन्ति। (द्रष्टव्य: श्लोकवार्त्रिक उपमानपरिच्छेद:, श्लो. 35) यद्द्रव्यप्रत्यक्षं येनेन्द्रियेण भवति तद्गता जाति: जातिसदृश: कश्चिदन्यो वा धर्म:, तेनैवेन्द्रियेण प्रत्यक्षीक्रियते। गवयो लोचनगोचरीभूत:, तद्वृत्तिगोसादृश्य रूपधर्मोऽपि लोचनगोचरतामेव गच्छेत्। एवं गवयनिष्ठगोसादृश्याभिन्नस्य गोनिष्ठगवयसादृश्यस्यापि प्रमिति: चक्षुषैव जायेत। तस्मात् प्रत्यक्षादिप्रमाणत्रयाबोध्य-विषयाभावात् उपमानं प्रमाणत्वेन न स्वीकार्यम्।

मीमांसका वेदान्तिनश्च अर्थापत्ति स्वतन्त्रं प्रमाणमभ्युपगच्छन्ति। अर्थस्य आपत्ति: कल्पना यस्मात् इति व्युत्पत्त्याऽर्थापत्तिशब्द: **प्रमाण**वाचक:, अर्थस्य आपत्ति: प्रतीति: इति व्युत्पत्त्या च **प्रमिति**वाचक:। एवमर्थापत्तिशब्द: व्युत्पत्तिभेदेन उभावर्थौ बोधयति। उपपाद्यज्ञानजन्यमुपपादकज्ञानम् अर्थापत्तिप्रमिति:, अस्या: प्रमिते: करणम् उपपाद्यज्ञानमर्थापत्तिप्रमाणम्। योऽर्थ: कल्पनीयेनार्थान्तरेण विना नोपपद्यते, स उपपाद्योऽर्थ:, यस्मिंश्च कल्पनीयेऽर्थेऽविद्यमाने उपपाद्योऽर्थ: नोपपद्यते, सोऽर्थ उपपादक: कथ्यते। अर्थापत्ते: प्रसिद्धमुदाहरणमस्ति, जीवन् देवदत्तो गृहे नास्ति इति। अत्रजीवतो देवदत्तस्य बहिरस्तित्वं कल्प्यते, गृहासत्त्वात्। जीवतो देवदत्तस्य बहिरस्तित्वं विना गृहावृत्तित्वं न संभवति। अतो देवदत्तस्य बहिरस्तित्वमुपपादकम्। एवं जीवतस्तस्य गृहवृत्तित्वाभाव: उपपाद्य:। जीवतो देवदत्तस्य गृहवृत्तित्वाभावज्ञानमर्थापत्तिप्रमाणम्, तस्य बहिरस्तित्वज्ञानं प्रमाणस्यास्य फलभूता प्रमितिरिति।

अत्र सांख्याचार्या: कथयन्ति यत् जीवतो देवदत्तस्य गृहासत्त्वात् बहिरस्तित्वज्ञानमनुमितिरूपतामेव धत्ते। ज्ञानमिदमनुमानप्रमाणेनैव लब्धुं शक्यते। अत्रेदमनुमानस्वरूपं भवति– ''देवदत्त: गृहाद्बहि: क्वचिदवश्यमस्ति, जीवितत्वे सति गृहासत्त्वात्। सन्नहं यदा गृहे न भवामि तदा बहि: क्वचनावश्यं भवामि। देवदत्तोऽपि जीवित:सन् गृहे नास्ति तस्माद्बहि: क्वचिदवश्यं भवेत्। एवमन्वयव्याप्तिमूलकेन– अनुमानेनैव अर्थापत्तिप्रमाणलभ्योऽर्थ: प्रतीयते। वस्तुतोऽर्थापत्तिलभ्योऽर्थ: व्यतिरेकव्याप्तिमूलकानुमानप्रमाणेनैव बुध्यते। अत्रोदाहरणेऽपि तत्सम्भवति–। व्यापका आकाशादय: पदार्था: एव एकस्मिन् काले सर्वत्र सन्तिष्ठन्ते। अव्यापका मूर्त्ताश्च पदार्था: स्वभावात् एकत्र विद्यामाना: अन्यत्राविद्यमाना एव भवन्ति। अत्रोदाहरणतया स्वशरीरमेव उपस्थापयितुं शक्यते। प्रकृतदेवदत्तोदाहरणे देवदत्त: पक्ष:, तस्यबहिरस्तिवं साध्यम्, जीवितत्वे सति गृहासत्त्वं हेतु:। यत्र यत्र वहिरस्तित्वं नास्ति तत्र तत्र जीवितत्वे सति गृहासत्त्वमपि नास्ति। यथाऽहम्। इत्थं व्यतिरेकव्याप्तिरप्यत्र सुलभैव। हेतौ साध्यस्य नियतसामानाधिकरण्यमन्वय व्याप्ति:, साध्याभावे हेत्वभावस्य नियतसामानाधिकरण्यम् व्यतिरेकव्याप्ति: कथ्यते।

अनुमितौ व्याप्तिज्ञानमिव पक्षधर्मताज्ञानमपि नूनमपेक्ष्यते। पक्षे हेतुवृत्तित्वं पक्षधर्मतेति कथ्यते। अत: हेतौ पक्षवृत्तित्वज्ञानमेव पक्षधर्मताज्ञानम्। क्वचिद् विद्यमानस्य देवदत्तस्य प्रत्यक्षप्रमाणसिद्धं गृहासत्त्वं नासिद्धं भवेत्। अतो देवदत्तरूपे पक्षे जीवितत्वे सति गृहवृत्तित्वाभावरूपो हेतु: सिद्ध एव, नासिद्ध:। अत: प्रकृतहेतुर्न स्वरूपासिद्ध:। देवदत्तस्य गृहासत्त्वं न तस्य सत्त्वसामान्यविरोधि भवितुमर्हति। अतो गृहवृत्तित्वाभावरूपस्य हेतो: सिद्ध्या बहिरस्तित्वरूपं साध्यं नाप्रसिद्धं भवेत्।

**मीमांसका** अत्रापत्तिमुपस्थापयन्ति। तदनुसारेण सत्त्वसामान्यबुद्धि: सत्त्वसामान्याभावबुद्धेर्विरोधिनी भवति। विशेषाणां समूह एव सामान्यमुच्यते। गृहसत्त्वाभाव: सत्त्वसामान्याभावस्य विशेषो भवति तस्मात् सत्त्वसामान्यबुद्धि: गृहसत्त्वाभावस्यापि विरोधिनी नूनं भवेत्। अतोऽत्र देवदत्ते जीवितत्वनिश्चयप्रयुक्तया सत्त्वसामान्यबुद्ध्या गृहसत्त्वाभावो बाध्येत। अत: गृहसत्त्वाभावरूपो हेतु: देवदत्तरूपे पक्षे कथं तिष्ठेत्? पक्षधर्मता च कथमुपपद्येत। शङ्कामिमां समादधद् वाचस्पति: कथयति– सामान्यत: सत्त्वेन गृहसत्त्वाक्षेप: दृढतरप्रमाणमूलकत्वाभावात् संशयग्रस्तो भवति। गृहे च

देवदत्तस्यासत्ता प्रत्यक्षमूला अनुपलब्धिमूला वा, अत एवाक्षेपलब्धेन संशयग्रस्तेन गृहसत्त्वेन प्रमाणावधारितो गृहसत्त्वाभावः न बाधितुं शक्यते।

केचिदिह कथयन्ति उपर्युक्तस्थले आप्तवाक्यात् क्वचन सिद्धाया देवदत्तस्य सत्ताया प्रत्यक्षसिद्धया गृहेऽसत्तया सह विरोधपरिहारः अर्थापत्तेर्मुख्यं प्रयोजनमस्ति। विरोधमिममपाकर्तुम् अर्थापत्तिप्रमाणं गृहभिन्ने क्वचन देशे सत्त्वकल्पनां कुरुते। इदमपि कथनं न युक्तिसङ्गतं प्रतिभाति। गृहावच्छिन्नसत्त्वस्य गृहावच्छिन्नसत्त्वाभाव एव विरोधितां धत्ते, न सत्त्वमात्रस्य। अत आगमप्रमाणसिद्धस्य सत्त्वसामान्यस्य प्रत्यक्षसिद्धेन गृहासत्त्वेन सह न कोऽपि विरोधावसरः। वेदान्तिनो मीमांसकाश्च अनुपलब्धिमपि पृथक् प्रमाणमिच्छन्ति। तदनुसारेण ''यदि भूतले घटोऽभविष्यत्, तदा स-उपलब्धोऽप्यभविष्यत्। भूतले घटानुपलब्धेः घटो नास्ति इत्यनुपलब्ध्या भूतले घटाभावप्रमितिर्जायते। तत्करणमनुपलब्धि-रपि स्वतन्त्रं प्रमाणं भवति।

तत्र **वाचस्पतेः** समाधानमस्ति-वस्तुतः उपलब्धेरभाव एवानुपलब्धिः भवति। किन्तु सांख्यशास्त्रे अभावः कश्चित् स्वतन्त्रः पदार्थो न मन्यते। भूतलवृत्तिघटाभावः भूतलस्यैव अवस्थाविशेषः, कैवल्यावस्थारूपो भूतलस्यैव अवस्थापरिणामो वा। अतः येन प्रमाणेन भूतलज्ञानं भवति, तेनैव प्रमाणेन तदभिन्नघटाभावस्यापि ज्ञानं भवति। सांख्यमतेन पुरुषातिरिक्ताः सर्वे पदार्थाः प्रतिक्षणं परिणामभेदं प्रतिपद्यन्ते। घटादिसहितत्वरूप सद्वितीयत्वपरिणामशीलस्य भूतलस्यैव घटरहितत्वरूपः कैवल्यरूपो वा परिणामः। अतिप्राचीना नैयायिकाः अनुमानेनैव अनुपलब्धिप्रमाणकार्यं साधयन्तिस्म। किन्तुन्यायवार्तिककार उद्द्योतकरः प्रत्यक्षप्रयोजकान् अनेकान् संसर्गान् प्रकल्प्य प्रत्यक्षेणैव अभावप्रमितिरूपकार्यसम्पादन-व्यवस्थां न्यायवार्त्तिके कृतवान्। (न्या. कुसुमाञ्जलिः, तृतीयस्तबके विंशतितमाकारिका, तद्गद्यटीका च द्रष्टव्या)

पौराणिकाः 'सम्भव' नामकमेकं पृथक् प्रमाणमङ्गीकुर्वन्ति। अनेन च प्रमाणेन खारीपरिमाणयुक्तद्रव्यस्य खारीपरिमाणज्ञानेन तदल्पप्रस्थादिपरिमाणज्ञानं भवति। इह खारीज्ञानं सम्भवप्रमाणम्, तदल्पप्रस्थादिज्ञानं संभवरूपा प्रमितिः। प्रमाण-प्रमित्योरेकमेव नाम 'सम्भव' इति कृतमस्ति। परमियमपि प्रमितिः अनुमानसाध्यैव। यत्र खारीरूपः परिमाणः तत्र प्रस्थादिरूपः परिमाणः अवश्यं भविष्यति। अतो व्याप्य-खारीज्ञानेन व्यापकप्रस्थादिज्ञानं धूमज्ञानेन वह्निज्ञानमिव अनुमानगम्यं स्यात्। तस्मात् कृतं संभवप्रमाणेनेति।

ऐतिहासिका ऐतिह्यमप्यतिरिक्तं प्रमाणमभ्युपगच्छन्ति। अनाप्तकथितयापि जनश्रुत्या वटवृक्षेऽस्मिन् यक्षो वसति इति वृक्षे यक्षप्रमितिर्जायते। प्रमितिरियमैतिह्यप्रमाणेन सम्पाद्यते।

अथोच्यते यदीदमैतिह्यम् अनिर्दिष्टवक्तृकं वाक्यमस्ति, ततोऽस्मात् वाक्यात् संशयात्मको बोधः सञ्जायेत। संशयात्मकबोधकरणं प्रमाणं नाभ्युपगम्यते। यदि वा तद् वाक्यमाप्तोक्तं, तदा तज्जन्यो बोधः शाब्दबोध एवाभिधीयेत। अतो युक्तमुक्तं सांख्यकारिकाकृता- ''**त्रिविधं प्रमाणमिष्टमिति।**''

सत्कार्यवादप्रतिपादने सांख्यकारिकाकार ईश्वरकृष्णः कथयति। कार्यं सदैव सदस्ति। यतस्तत् स्वोपादानकारणे करणव्यापारात् प्रागपि विद्यत एव। उपादानकारणे पूर्वतोऽसतः कार्यस्य नोत्पत्तिः संभवति। उपादानकारणसम्बद्धमेव कार्यं सन्तिष्ठते। अतः सर्वेभ्यः कारणेभ्यः सर्वेषामुत्पत्तिर्न भवति। कुशलः कुलालः मृत्पिण्डाद्युपकरणयोगात् शक्यस्यैव घटादेरुत्पादनं करोति नाशक्यमुकुटादेः। यज्जातीयञ्च कारणं भवति, कार्यमपितज्जातीयमेव जायते, नान्यजातीयम्। धान्यबीजात् धान्यमेवोत्पद्यते, न यवः। तस्मात् सिद्धः सत्कार्यवादः इति।

**असदकरणादुपादानग्रहणात् सर्वसम्भवाभावात्।**

**शक्तस्य शक्यकरणात् कारणभावाच्च सत्कार्यम्।।** (कारिका सं. 9)

असत्कार्यवादिनो नैयायिकादीन् विरुध्य सांख्याचार्याः प्रतिजानन्ति सत्कार्यमिति।। परं नैयायिका अपि कार्यमसन्नेच्छन्ति। तन्मतेऽपि कार्यसत्ताऽभिप्रेतास्ति। अतः कार्ये सत्त्वमात्रसाधकं कारिका-स्थमनुमानवाक्यं सिद्धसाधनरूपदोषदूषितं स्यात्। अतः कारिकागतप्रतिज्ञावाक्ये पूर्वं ''करणव्यापारात्प्रागपि' इत्यंशो योजनीयः स्यात्। कार्ये केवलं सत्त्वसाधनं नाभिप्रेतमस्ति, किन्तु करणव्यापारात्पूर्वकालिकं सत्त्वं साधनीयमस्ति। करणव्यापारात् प्राक् कार्यं यदि सन्न मन्येत, तदा करणव्यापारानन्तरमपि कोऽपि कार्यं सत् कर्त्तुं नार्हति। सहस्रं शिल्पिनो मिलित्वापि नीलं पीतं कर्तुं नेशते। एवमेव पूर्वतोऽसत्कार्यं कोऽपि पश्चादपि सत् कर्त्तुं न शक्नोति।

एवमयं स्वकौमुद्यां सांख्यकारिकाकृतईश्वरकृष्णस्याशयप्रकाशने शास्त्रमर्मोद्घाटने पूर्णतया साफल्यमवाप्तवान्। अयं सक्षिप्तयाऽपि कौमुद्या दार्शनिकजगति सर्वतो विस्तीर्णां कीर्त्तिकौमुदीं प्रसारयामास। अयं सर्वास्तिकदर्शनग्रन्थानां व्याख्यां विलिख्य परमसत्यान्वेषणे सर्वेषां तेषां सहयोगित्वं समुचितोपकारं प्रामाणयत्। निखिला दर्शनपद्धतयः तमेव लक्ष्यं परमात्मानं नयन्ति संसृतिभीतपथिकान्। सरितः सागरमिव सर्वे पन्थानस्तमेव गच्छन्ति। यथोक्तं शिवमहिम्नः स्तोत्रे पुष्पदन्तेन-

**त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति,**
**प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च।**
**रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां**
**नृणामेको गम्यस्त्वमसि पयसामर्णव इव।। इति।**

ग्राम- धर्मपुर
पो.- लोहनारोड,
जि.- दरभंगा (बिहार)
पिन कोड - 847407
दूरभाष- 9934919280



वर्ष : 47 अङ्क : 2 स्वरमङ्गला
अप्रेल-जून, 2022 ISSN-2249-9296

# दर्शनानुसारं शिक्षक-शिक्षार्थी-संकल्पना

डॉ. रेखा शर्मा

**ज्ञानेन विद्यया चैव प्रज्ञा शश्वद्विवर्धयेत।**
**यस्य प्रज्ञामयं चक्षुश्चक्षुष्मान् सः नरः स्मृतः[1]।।**

प्राचीनकाले शिक्षायाः धारणेयमासीत् यत् शिक्षा नाम नैका कुशलता, प्रत्युत बह्वीनां कुशलतानां समन्वयो वर्तते। साम्प्रतिके युगे धारणेयं परिवर्तिता परिवर्धिता च जाता विद्यते। यतोहि बालकानां सर्वांगीणः विकास एव सम्प्रति शिक्षेति स्वीक्रियते। वस्तुतः शिक्षा एव व्यक्तित्वस्य पूर्णविकासस्य सोपानं वर्तते। एषा छात्रेष्वन्तर्निहितशक्तीः प्रदर्श्य ताः विकासयति। शिक्षया छात्रः व्यवहारस्य परिष्कारं करोति। परिष्कारेऽयं बालकेभ्यः समाजेभ्यश्च उपयोगी भवति। शिक्षा सर्वानपि आयामान् संस्पृशति। इदानीं शिक्षायाः लक्ष्यं किम्? इति जिज्ञासा उत्पद्यते। शैक्षिकोद्देश्यानां विषयवस्तु शिक्षादर्शनस्य एव विषयः वर्तते। शैक्षिकप्रक्रियायाः निर्धारणे शिक्षादर्शनं सहकरोति तथा च पूर्णतः मार्गदर्शनं करोति। पाठ्यक्रमनिर्धारणं शिक्षादर्शनस्य क्षेत्रमस्ति। जिज्ञासुः जिज्ञासाम् अग्रेसारयति। ज्ञानबलेन सत्यान्वेषको भूत्वा स्वयं दार्शनिको भवति। केवलं बौद्धिकविकासेन जगत् (प्रपञ्चः) भावशून्यं जायते। भावात्मकजीवनस्य आवश्यकता जीवनदर्शनस्य अनिवार्यतां ख्यापयति। भावात्मकं जीवनं व्यक्तिषु समुदाये च सामञ्जस्यं सामरस्यञ्च स्थापयितुं प्रभवति समर्थो वा भवति।

**दर्शनशिक्षयोः सम्बन्धः -**

शैक्षिकसमस्यानां समाधानाय तत्त्वज्ञानमत्यन्तमपेक्षते। आचरणस्य कृते सिद्धान्तः मार्गदर्शकः न भवति चेत् आचरणं लक्ष्यविहीनम् अनिश्चितम्, असंगतम्, असमर्थञ्च भवेत्। एवमेव सिद्धान्तस्य कृते आचरणं यदि न भवति तर्हि सोऽपि सिद्धान्तः निरुपयोगः, अव्यवस्थितः, अस्पष्टश्च भवेत्। अतः प्रत्येकस्मिन् समाजे तत्त्वशास्त्रस्य शिक्षाशास्त्रस्य च मध्ये अविनाभावसम्बन्धः अन्योन्याश्रयसम्बन्धो वा वर्तते।

**प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।**
**आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता[2]।।**

अतोऽनेन स्पष्टं भवति यत् दर्शनशब्दस्य अर्थोऽवलोकनमस्ति येन दृश्यते भिन्नजिज्ञासानां समाधानं वा भवति, तदेव दर्शनम्। दर्शनं कस्य इति जिज्ञासायामुच्यते यत् दृश्यस्यैव दर्शनं क्रियते इति। तर्हि किम् दृश्यम्? तदेव सच्चिदानन्दानन्तं ब्रह्म यत्तावत् अस्य ब्रह्माण्डस्य सञ्चालकं व्यापकं त्रिगुणातीतं द्वन्द्वविरहितं, तदेव दर्शनीयं, तदेवास्माकं

प्रमाविषयः, तदेव चेतनम् अमलं सुखसिन्धुश्च। एवञ्च संसारेऽस्मिन् सर्वेऽपि जीवधारिणः आहारनिद्राभयमैथुना-दिव्यवहारपरायणाः विद्यन्ते। मानव एव तादृशः एकः बुद्धिविचारविवेकधर्मादि गुणगणविभूषितोऽस्ति यश्च स्वविवेकशक्त्या सर्वदैव चिन्तयति यत् कथं दुःखनिवृत्तिः सुखावाप्तिश्व भवेदिति।

**वेदांतदर्शने आचार्यस्य स्वरूपं**

छात्रबुद्धिं विकासयति यः स आचार्यः तथा च छात्रोपयोगिविषयान् संगृह्णाति। उक्तञ्च-

**आचार्यः कस्मात् ? आचार्य आचारं ग्राहयति।**

**आचिनोत्यर्थान्। आचिनोति बुद्धिमिति वा**[3]।।

एवञ्च यः सदाचार-शिक्षणपूर्वकं छात्रेषु जितेन्द्रियत्वं पोषयति स आचार्यः।

अथर्ववेदे आचार्यो मृत्युर्वरुणः सोम इत्युच्यते। गुरुर्विविधविद्यापारदृश्वा, ज्ञान-विज्ञान-नदीष्णः, अध्यापनविधिनिष्णातश्चाभूत्। अत एव स वाचस्पतिरित्याख्यां जगाम। मनसो दिव्यत्वं संयमप्रियत्वं च प्रशस्यते। आचार्यः ब्रह्मज्ञानी भवति। अतः वारम्वारम् आचार्यसमक्षं गच्छेयुः ब्रह्मज्ञानप्राप्त्यर्थम् इति मुण्डकोपनिषदि निर्देशः कृतः, **तद्यथा-**

**तद्धि ज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्**[4]।। इति।

आचार्य- शिष्ययोः पितापुत्रवत् सम्बन्ध आसीत् इति ज्ञायते। उपनयनसंस्कारेण शिष्यस्य गुरोः समीपनिवासाद् अन्तेवासित्वं संजायते। तैत्तिरीयोपनिषदि गुरुशिष्ययोस्तथा एकोद्देश्यत्वं चित्तैकत्वं च निर्देश्येते यथा द्वयोरेव सामंजस्येन श्रीवृद्धिः, विद्यायाश्च तेजस्वित्वं सम्पद्यते। तद्यथा-

**सह नाववतु, सह नौ भुनक्तु, सह वीर्यं करवावहै। तेजस्विनावधीतमस्तु मा विद्विषावहै**[5]।। इति।

सह नौ यशः, सह नौ ब्रह्मवर्चसम् इत्यनेन निर्दिश्यते यद् गुरोराशीर्वादेन छात्रस्य यशः, तेजस्विभिश्छात्रैश्च गुरोर्यशः प्रथते। गुरोर्विश्वामित्रस्य कृपया रामस्य यशः, छात्रस्य दयानन्दस्य च तेजस्वितया गुरोर्विरजानन्दयतेर्यशोऽप्रथत। गुरुशिष्ययोर्द्वयोरेव सामञ्जस्येन सद्भावेन च द्वयोरपि तेजोवृद्धिः संजायते।

**अत -एवोच्यते-**

**आचार्य : पूर्वरूपम्॥ अन्तेवास्युत्तररूपम्। विद्या संधिः। प्रवचनं सन्धानम्**[6]।। इति।

आचार्यश्छात्रवृंदहितकरणार्थं छात्रज्ञानवृद्ध्यर्थं च प्रतिपलमचिन्तयत्।

अत एवोच्यते- **आ मा यन्तु ब्रह्मचारिणः स्वाहा। यशो जनेऽसानि स्वाहा।**

**यथापःप्रवता यन्ति। एवं मां ब्रह्मचारिणि धातरायन्तु सर्वतः स्वाहा।**[7]

**वेदांतदर्शने गुरुशिष्यसम्बन्धः**

सत्यं, ज्ञानम्, आनन्दः, इति पदत्रयेण परमतत्त्वम् उद्बोधयन्ति वेदाः। एतस्य पदत्रयस्य निर्वचनानि तथा व्याख्याश्च उपनिषत्सु, ब्रह्मसूत्रेषु, भगवद्गीतायां च अन्तर्भवन्ति। इत्थं वेदानां ब्रह्मतत्त्वम् अवगन्तुं वेदान्तशास्त्रं समुत्पन्नम्।

वेदान्तशास्त्रम् अथवा वेदान्तदर्शनं ब्रह्मज्ञानं प्रददाति। धर्म-अर्थ-काम-मेक्षादिषु चतुर्षु पुरुषार्थेषु मोक्ष एव परमपुरुषार्थः इति भारतीयानां चिंतनम्।

दर्शनशास्त्रे मोक्षस्य एव परमप्राधान्यं कल्प्यते। ब्रह्मविद् ब्रह्मैव भवति इत्यादिना ज्ञानमेव मोक्षसाधकमिति वदन्ति। विद्यां च अविद्यां च वेद, उभयं सः तमेतेन वेदानुवचनेन ब्राह्मणाः विविधामाशंसन्ति यज्ञेन इत्यादिवचनैः ज्ञानकर्माभ्यां सह मोक्ष इति सिध्यति। वेदः प्रधानतया द्विधा विभक्तः कर्मकाण्डः, ज्ञानकाण्डः च। कर्मकाण्डे कर्म, अनुष्ठानानि, ज्ञानकाण्डे ज्ञानम्, आध्यात्मिकता च वर्तते। वेदान्तदर्शनं ज्ञानकाण्डप्रधानं वर्तते। वेदान्तो नाम उपनिषद् प्रमाणम्। विद् धातोः घञ् प्रत्यये वेदशब्दो निष्पद्यते। वेदान्ते गुरुशिष्ययोः सम्बन्धः चतुर्विधः भवति। प्राप्य-प्रापकसम्बन्धः, बोध्य-बोधकसम्बन्धः, पिता-पुत्रसम्बन्धः, वक्तृ-श्रोतृसम्बन्धः इति। बालकानां प्रारम्भिकशिक्षा गृहे एव दीयते। पश्चात् बालकाः गुरुकुलम् आगत्य विद्योपार्जनं कुर्वन्ति। गुरुगृहप्रवेशात् पूर्वम् उपनयनसंस्कारः अनिवार्यः आसीत्। वेदपठनस्य आरम्भः उपनयनसंस्कारेण एवाभवत्। उपनयनं नाम गुरोः समीपगमनम्। उपनयनसंस्कारः ब्राह्मणानाम् अष्टमे वयसि, क्षत्रियाणाम् एकादशे, वैश्यानां द्वादशे च। शूद्राणां कृते अवकाशः नासीत्। परन्तु **शंकराचार्यस्य काले सर्वेषां कृते समानशिक्षा आसीत्।** गुरुशिष्येषु उत्तमसम्बन्धाः च आसन्।

स्वामीदयानंदः स्वीयप्रणीतसत्यार्थप्रकाशाख्ये ग्रंथे तृतीयसमुल्लासे ब्रह्मचर्यस्य महत्त्वमुपावर्णयत्। विद्यार्थिजीवने ब्रह्मचर्यस्य पालनं नितराम् अपेक्षते इति ते समुदघोषयन्। ते अबोधयन् यत् - ब्रह्मचर्यकाले अन्यान् व्यापारान् परित्यज्य विद्याभ्यासं कुर्वन्तो ब्रह्मचर्यं पालयन्तु इति। विद्यार्थिनामेतत् प्रधानकर्त्तव्यं वीर्यस्य संरक्षण वेदानां पठनं च। उक्तञ्च मनुना-

**एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित्।**

**कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः[१]।।**

ब्रह्मचर्याचरणात् शरीरे बलवृद्धिम् एति, उत्साहस्य आधिक्यमायाति।

बलाधिक्येन मनुष्योऽसाध्यमपि कार्यं सुसाध्यं कर्त्तुं पारयति। ब्रह्मचर्यस्य महिमा अलौकिकः विद्यते। ये मनुष्या अस्य पालनं कुर्वन्ति, ते मृत्युमपि जेतुं प्रभवन्ति। उक्तञ्च श्रुत्या-

**ब्रह्मचर्येण तपसा राजा राष्ट्रं वि रक्षति।**

**आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते।।**

**ब्रह्मचर्य्येण कन्या युवानं विन्दते पतिम्।**

**अनड्वान् ब्रह्मचर्येणाश्वो घासं जिगीषति।।**

**ब्रह्मचर्येण तपसा देवा मृत्युपमाघ्नत।**

**इन्द्रो ब्रह्मचर्य्येण देवेभ्यः, स्वराभरत।।**

ते पुनरपि ब्रह्मचर्यमहिमानं वर्णयन्तः समुदबोधयन्-

वीर्यस्य एकस्यापि विन्दोःपतनं मरणमामन्त्रयति। तद्बिन्दोः रक्षणेन जीवनम् सुखमयं भवति। उक्तञ्च-

**मरणं बिन्दुपातेन जीवनं बिन्दुधारणात्।[७] इति।**

अतः छात्राणां कृते ब्रह्मचर्यपालनमतीवावश्यकम् अस्ति। तेषामाहारविहारनियमा अतीव कठिनाः भवन्ति। ब्रह्मचर्यनियमान् समसूचयन् ते मनुवाक्यं अस्मरन्। तद्यथा–

**वर्जयेन्मधु मांसं च गन्धं माल्यं रसान् स्त्रियः।**
**सूक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम्।।**
**अभ्यंगमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम्।**
**कामं क्रोधं च लोभं च नर्तनं गीतवादनम्।।**
**द्यूतं च जनवादं च परिवादं तथाऽनृतम्।**
**स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च।।**[10]

## संदर्भग्रंथाः


1. बुद्धचरितम् 26/71
2. सर्वदर्शनसंग्रहः– श्री मन्माधवाचार्यः
3. निरुक्तम् 1–4
4. मुंडकोपनिषद् 1–2–12
5. तैत्तिरीयोपनिषद् 2–1–1
6. तैत्तिरीयोपनिषद् 1–3–3
7. तैत्तिरीयोपनिषद्1–4–2–3
8. ऋग्वेदादिभाष्यभूमिका, पृ. 79
9. अथर्ववेदः 11/3/17,18,19
10. मनुस्मृतिः, 2/179



सहायक आचार्यः (शिक्षाविभागः)

केन्द्रीयसंस्कृतविश्वविद्यालयः, जयपुरपरिसरः




# आध्यात्मिकग़ज़लगीतिः

– डॉ. हर्षदेवमाधवः

## दीपः

(आध्यात्मिकग़ज़लगीतिः– मन्दाक्रान्ता)

आवर्तेषु ह्यविचलगतिस्स्वं सदा पाति दीपः। नायात्यद्धा त्रिगुणरहितो नैव वा याति दीपः।।
गाढे ध्वान्ते न हि विचलितस्स्वस्थतेजस्तनोति। भालोकानां भुवनप्रथितस्स्वर्द्युतौ भाति दीपः।।
पश्यन्त्येनं हृदयनिलये द्योतमानं हि धीराः। शुद्धो बुद्धो भवचितिमयः ह्यत्र पुष्याति दीपः।।
तूष्णीं तूष्णीं प्रविशति गुहां ज्योतिषां ज्योतिरेकः। एकैवायं सकलभुवनं ह्योजसा माति दीपः।।
संसारेऽस्मिन् तमसि पतिते यो हि जागर्ति नित्यम्। एको देवो जगति सकलं केवलं शास्ति दीपः।।
आज्ञाचक्रेऽप्रतिहतगतिर्दिव्यलोकं प्रविष्टः। निस्स्नेहोऽयं द्युतिमनुपमां सौख्यदां राति दीपः।।
दूरीभूतं गहनतिमिरं जन्मजन्मान्तराणाम्। आत्माख्याने रहसि मधुरं मर्म व्याख्याति दीपः।।

## हंसः

(आध्यात्मिकग़ज़लगीतिः– शालिनी)

स्वान्तः क्लेशैर्दूयते नैव हंसः। भावाभावैर्दुष्यते नैव हंसः।।
मुक्ताकाशे स्वैरयात्राऽस्ति मुक्त्यै। कारागारै रुध्यते नैव हंसः।।
अब्धौ भीतिर्मज्जनस्यापि नास्ति। नौकाभिर्वा नीयते नैव हंसः।।
देवैर्नाब्धेर्लभ्यते मथ्यमानात्। स्वर्वेश्याभिर्मोह्यते नैव हंसः।।
यूपे यूपे नित्यमुक्तं निबद्धम्। कर्तुं यत्नैर्बध्यते नैव हंसः।।

ध्वान्ते गाढे नासदीये निगूढः। वादालोकैर्दृश्यते नैव हंसः।।
ब्रह्माण्डेऽस्मिन् तस्य दिव्या प्रतिष्ठा। रूपाकारैर्वर्ण्यते नैव हंसः।।
शास्त्राच्छास्त्रं ह्याश्रमादाश्रमञ्च। भ्रामं भ्रामं गम्यते नैव हंसः।।
व्यर्था बाणाः पार्थ! ते लक्ष्यहीनाः। हन्ता नायं हन्यते नैव हंसः।।
स्नायं स्नायं पुण्यश्लोकस्त्रिवेण्याम्। युक्तो नायं युज्यते नैव हंसः।।
शोकान्मुक्तः सच्चिदानन्दकामः। मायाबन्धैः क्लिश्यते नैव हंसः।।

## ईश्वरवरप्रदानाध्यात्मिकग़ज़लकाव्यम्

(भुजङ्गप्रयातच्छन्दः)

ग्रहा मेऽनुकूला भवन्तु 'तथास्तु'। मुदा दिग्गजा मां नमन्तु 'तथास्तु'।।
लयं भित्तयो यान्तु सौहार्ददेशे। हृदां रागद्वेषा गलन्तु 'तथास्तु'।।
सुधाऽऽप्लाविता दिव्यनक्षत्रसङ्घाः। मरन्दं स्वमूर्ध्नि स्त्रवन्तु 'तथास्तु'।।
कवेश्शब्दवाहा दिगन्तं गता ये। द्युलोकस्य तेजो जयन्तु 'तथास्तु'।।
स्वयं प्रस्थिता मृत्युराजाः स्वलोकात्। मुदा मोक्षविद्यां दिशन्तु 'तथास्तु'।।
तमिस्त्राणि ज्योतिष्पथान् नो नयन्तु। शिवे जीवभावा द्रवन्तु 'तथास्तु'।।

8, राजतिलकबंगलो,
आबादनगरसमीपे बोपाल,
अहमदाबाद



वर्ष : 47 अङ्क : 2
अप्रेल–जून, 2022

स्वरमङ्गला
ISSN-2249-9296

# कुमारसम्भवस्य पञ्चमे सर्गे नारीस्थितिः

**प्रोफेसर मङ्गलारामः**

महाकविः कालिदासः सर्वोत्कृष्टकलाकारस्त्वस्त्येव संस्कृतसाहित्यस्य यदि कथ्येत सर्वश्रेष्ठकलाकारो विश्वसाहित्यस्य तर्हीयं कापि नातिशयोक्तिः। तस्य समानता सर्वोच्चसफलकलाकारशैक्सपीयरेण साकङ्क्रियते आङ्गलभाषासाहित्यस्य। अत्रानुचितं न भवतीदं कथनं यत् शैक्सपीयरोऽवश्यमेवास्ति योग्यनाटककारः किन्तु कालिदासस्तु द्वयोर्महाकाव्ययो रघुवंशकुमारसम्भवयोरपि रचनां कृतवान्नाटककाराद्व्यतिरिक्तमतः अनया दृष्ट्या कालिदासः शैक्सपीयराद्विशेषः। यद्यपि द्वावेव कवी अवश्यमेव स्त उच्चकोटेः किन्तु यावन्महाकाव्यस्य सम्बन्धस्तत्र कालिदासः शैक्सपीयराद्विशेषः। महाकवेरुपाधिरक्षरशः सत्यमेव तान्प्रदत्तः काव्यमर्मज्ञैः। कोमलकान्तपदावलीप्रसादगुण–गुम्फितभाषाभावगाम्भीर्यशैली–मौलिकताकल्पनोदात्ततालङ्कारस्वाभाविकतारसपरिपाकप्रभृतिसमस्तोत्कृष्टगुणा एकत्रीभूय कालिदासस्य रचनास्वीदृशी रोचकता जनिता यत्पाठकस्तस्य रसास्वादेन सन्तुष्यान्यच्च सर्वं विस्मरति स्वयमेव भवति चानन्दाप्लावितः।

कालिदासस्सर्वश्रेष्ठं देदीप्यमानं नक्षत्रमस्ति भारतीयकाव्याकाशस्य। इयम्महती विशेषतास्ति कालिदासस्य कलायाः यत्सा समाजस्य कृतेऽस्ति न तु कलायै केवलम्। अस्य कलायां समाजजीवनस्य सुखदुःखयोर्हर्षविषाद–योर्रागविरागयोर्गम्भीराणां साधारणानाञ्च सर्वासां भावनानां समावेशो भूतः। स ईदृशः कलाकारोऽस्ति यः स्वयुगस्य चेतनां स्वकलायां मुखरितां कृतवान्। स पुरातनस्य भारतीयसंस्कृतेः प्रतिनिधिः कविरस्ति। तस्य पात्राणि सजीवमूर्तिमन्ति सन्ति भारतीयतायाः। तस्य ग्रन्थानामध्ययनमात्रेण तत्कालीनसामाजिकसभ्यतायाः संस्कृतेश्च ज्ञानं पाठकाय सहजमेव भवति। निःसन्दिग्धं सर्वोत्तम आचार्योऽस्ति कालिदासो भारतीयकाव्यशैल्याः।

**कालिदासस्य महत्त्वम्** – संस्कृतसाहित्यस्य सर्वोत्तमगद्यलेखको बाणस्स्वहर्षचरिते कालिदासस्य कवितां प्रशंसयन् लिखति–

**निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।**
**प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते।।**[1]

टीकाकारो मल्लीनाथस्तु कालिदासस्य कलाविषये लिखितवान्यत्कालिदासस्य वाण्याः सारमद्ययावत्केवलं त्रयो जना बोधितवन्तः। प्रथमो विधाता, द्वितीया वाग्देवी सरस्वती, तृतीयस्तु कालिदासः स्वयमेव। मादृशा अल्पज्ञा जनास्तां सम्यगवबोधनेऽसमर्थास्सन्ति सर्वथा–

**कालिदासगिरां सारं कालिदासः सरस्वती।**
**चतुर्मुखोऽथवा ब्रह्मा विदुर्नान्ये च मादृशाः।।**

**कालिदासस्य सन्देशः**– संस्कृतसाहित्यस्याध्ययनमेव भवितुं न शक्यं विना कालिदासम्। वयं कालिदासं त्यक्तुं न समर्थास्त्यक्त्वा च सन्तोषो न प्राप्यते। स्वसमस्तचित्रणैर्मानवजीवनस्य मुख्यादर्शस्य स्थापनामकरोत्कालिदासः। तेषां ग्रन्थानामेकमात्रसन्देशोऽयमेव यत्त्यागमयेन तपस्यामयेन तपोमयेन च जीवनेन मानवस्स्ववास्तविककल्याणस्य प्राप्तिं कर्तुं शक्नोति। कालिदासस्य सन्देशस्त्रिभिस्तकारैर्व्यक्तीकर्तुं शक्यते त्यागस्तपस्या तपोमयजीवनञ्च। मानवमात्रस्य यथार्थमङ्गलं भवति तपोवने पालितसभ्यतयैव। क्षुद्रस्वार्थस्य निवारस्त्यागेन भवति यथार्थोन्नतिश्च तपस्याबलेनैव कर्तुं शक्यते। मानवयोन्यां जन्म लब्ध्वा विषयाणां दासो भवनं मानवजीवनस्य नास्ति लक्ष्यम्। आध्यात्मिकजीवने एव यथार्थात्मनो दर्शनं सुलभमस्ति तेन च निःश्रेयसः प्राप्तिर्भवितुं शक्यते।

**यथार्थस्थितिर्नार्याः**– यद्यपि भगवता मनुना नारीविषये कथितं यदस्मिन्संसारे पुरुषाणां हृदयेषु विकारोत्पत्तिकरणं स्त्रीणां प्रकृतिरेवास्ति। बुद्धिमन्तो नरा अस्मात्कारणात्तासां विषयेऽसावधाना न भवन्ति यतः प्रकृष्टमदोपेता युवतयो न केवलं कामक्रोधवशीभूतं मूर्खजनमसन्मार्गं प्रति प्रापयितुं समर्थास्सन्ति अपितु ज्ञानिनमपि पुरुषं कुमार्गं नेतुं पर्याप्तरूपेण सक्षमा भवन्ति।[2] तथापि कालिदासेन कुमारसम्भवे नार्या यथार्थस्थितिः स्पष्टीकृता। यदा पार्वती दृष्टवान् यच्छिवेन कामदेवो भस्मीकृतस्तदा सा स्वसौन्दर्यस्य निन्दामकरोद्यतः सौन्दर्यस्य सार्थकता तदैव भवति यदा तत्सौन्दर्यं स्वेष्टजनं स्वं प्रति आकर्षणयोग्यं भावयेत्। वस्तुतः तत्सौन्दर्यं सौन्दर्यमेव न कथ्यते यत्स्वेष्टं वशीकर्तुं न समर्थः। सौन्दर्यमीदृशं पूर्णतया निष्फलमेव भवति। पार्वती आसीदतिसुन्दरी किन्तु तस्याः सौन्दर्यं प्रियं शिवं स्वं प्रति आकृष्टकरणेऽयोग्यमभवत्। यथोक्तं कालिदासेन– **प्रियेषु सौभाग्यफला हि चारुता।**[3]

**दृढेच्छाशक्तिर्नार्याः** – कालिदासस्य दृष्ट्यां नार्या दृढेच्छाशक्तिं कोऽपि जनः परिवर्तयितुं न शक्नोति। यद्यपि हिमालयस्य भार्या मेना स्वपुत्रीं पार्वतीं शङ्कराय तपस्यायै कृतपरिश्रमां श्रुत्वा महन्मुनिव्रताद्रोद्धुमियेष 'तपः क्व वत्से क्व च तावकं वपुः'[4] प्रभृतिदृष्टान्तैश्च तपस्यायाः कठोरता प्रतिपादिता किन्तु सा स्वप्रयासे न सफला जाता यतः 'कः ईप्सितार्थस्थिरनिश्चयं मनः पयश्च निम्नाभिमुखं प्रतीयेत्'[5]। पार्वती मनस्विनी आसीत्। मनस्वी जनो नैकविघ्नेषूपस्थितेष्वपि कार्यं प्रारभ्यान्तः न त्यजति। उक्तञ्च–

**महाकार्ये कृतोद्योगो विघ्नैराहतमानसः।**
**प्रारब्धं न त्यजति यः स मनस्वीति कथ्यते।।**

यदा ब्रह्मचारी पार्वतीं शिवासक्तिविषये पृच्छति 'अपीदमेव परिहासः'[6] तदा सा दृढ़तापूर्वकं चिरेण स्वीकृतवाक् परिमितवर्णं यथा स्यात्तथोवाच यदियं मम कामनावश्यमेव पूर्णा भविष्यति यतो हि कामनामवरोद्धुं लोके कोऽपि जनो न प्रभवति–

**यथाश्रुतं वेदविदां वर त्वया जनोऽयमुच्चैः पदलङ्घनोत्सुकः।**
**तपः किलेदं तदवाप्तिसाधनं मनोरथानामगतिर्न विद्यते।।**[7]

पार्वती अधिकैश्वर्यानिन्द्रादीन्दिक्चतुष्टयीपतीनवधूयाकामुकत्वात्सौन्दर्येणावशीकरणीयं शिवं भर्त्तारं प्राप्तुमभिलषति। पार्वत्याः सखी तद्विषये कथयति–

**इयं महेन्द्रप्रभृतीनधिश्रिय-श्चतुर्दिगीशानवमत्य मानिनी।**

**अरूपहार्यं मदनस्य निग्रहात् पिनाकपाणिं पतिमाप्तुमिच्छति।।**[8]

**नार्यास्तपश्चर्या** – तपश्चरणप्रवृत्ता पार्वती प्रतिदिनं नियमतस्त्रिवारं स्नानमग्निहोत्रञ्चाकरोत्। सा वल्कलपरिधाने वेदपाठे च निरताऽऽसीत्। अनवरतनियमानुपालनात्सा धर्मेऽग्रणीः जाता। परिणामतः नैकतपस्वीजनास्तद्दर्शनायाऽऽगताः। यद्यपि गौरी अल्पवयस्काऽऽसीत्तथापि तां निकषा तस्या वयसोऽधिकाग्रजा मुनय आगच्छन्ति स्म। अतः महाकविकालिदासः कथयति यद्यो जनो धर्मवृद्धो भवति तस्याऽऽयुः प्रति कोऽपि नावधानं ददाति–

**न धर्मवृद्धेषु वयः समीक्ष्यते।**[9]

चत्वारो भेदास्सन्ति वृद्धत्वस्य–वैराग्यवृद्धत्वं ज्ञानवृद्धत्वं धर्मवृद्धत्वं वयोवृद्धत्वञ्च। एषु प्रथमत्रयाणां वृद्धत्वं चतुर्थप्रकारस्य वृद्धत्वस्यापेक्षां न करोति। यथोक्तं मनुना–

**न तेन वृद्धो भवति येनास्य पलितं शिरः।**

**यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः।।**[10]

तात्पर्यमिदं यद्ये जना धर्मे श्रेष्ठतामाप्नुवन्ति तेषामवस्थाविषये नास्ति विचारावश्यकता। भवभूतिनाऽप्युक्तम्–

**'गुणाः पूजास्थानं गुणिषु न च लिङ्गं न च वयः।'**

पार्वती लक्ष्यमधिकृत्य केवलं तपस्यामकरोत्तस्मात्सा यस्मिन्काले तावत्परिणामेन प्राक्तपोनियमेनाभिलषितं हरवशीकरणरूपप्रयोजनं लब्धुमशक्यममंस्त, तत्काले स्वदेहसौकुमार्य्यमविगणय्य दुस्तरे तपः साधयितुमारेभे। तस्मात्कविर्लिखति कालिदासः–

**क्लमं ययौ कन्दुकलीलयापि या तया मुनीनां चरितं व्यगाह्यत।**

**ध्रुवं वपुः काञ्चनपद्मनिर्मितं मृदु प्रकृत्या च ससारमेव च।।**[11]

स्वतश्च्युतवृक्षपत्रवर्त्तनत्वं व्रतस्य परमोत्कर्षः, भूयः पार्वत्या पर्णवर्त्तनमपि दूरीकृतम्। पर्णभक्षणत्यागाद्धेतोः प्रियभाषिणीं पार्वतीं पुराणज्ञाः 'अपर्णा' इति कथयन्ति।[12]

**अतिथिसत्कारगुणो नार्याः** – शिष्टनार्याश्चरित्रे एकः प्रसिद्धो गुणो भवति यत्साऽतिथिं देवतारूपेण गणयति। अतिथिसत्कारकरणं तस्या महान् गुणः। गौरी अतिथिसत्कारिणी आसीत्तस्मात्सा ब्रह्मचारिणं शिवं सादरं पूजितवती। सर्वत्र समबुद्धीनां व्यक्तिविशेषेष्वतिगौरवयुक्ताश्चेष्टाः प्रवर्तन्ते। अर्थात् सर्वजनान्समदृष्ट्या दर्शकाः समदर्शिनोऽपि विशिष्टजनानां कुर्वन्ति यथोचितसत्कारमिति कविनोक्तम्–

**भवन्ति साम्येऽपि निविष्टचेतसां वपुर्विशेषेष्वतिगौरवाः क्रियाः।**[13]

पार्वत्या कृतेऽतिथिसत्कारविषये ब्रह्मचारी स्वयं कथयति यत्स्वेन कृतपूजातिशयं मामनात्मनीयं नार्हसि ज्ञातुन्त्वं यतो सज्जनानां सख्यं सप्तपदोच्चारणसाध्यं कथ्यते विद्वद्भिः।[14] ब्रह्मचारिणः कथनस्य तात्पर्यमिदं यत्तस्य पार्वत्या सह कतिपयो वार्तालापस्सञ्जातस्तस्मात्तावुभौ मित्रतां गतौ परस्परम्। अधुना स तस्याः कुशलतायाः समस्तसमाचारान्ज्ञातुमर्हति।

अन्ते पार्वती शिष्टाचारत एव स्वसखीं कथयति यद्धे सखि! स्फुरणभूयिष्ठोष्ठो भूयः किञ्चिदपि वक्तुमिच्छुरेषू वाचाटोऽस्मादाश्रमान्निस्सार्यताम्, हि यः पुरुषः पूज्यानपवदति न केवलं स निन्दाकर्त्ता एव पापीयान्भवत्यपितु तस्माद्य आकर्णयति स श्रोतापि भवति पापीयान्।[15] मनुनाप्युक्तम्–

**गुरोर्यत्र परीवादो निन्दा वापि प्रवर्त्तते। कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः।।**

**परीवादात्खरो भवति श्वा वै भवति निन्दकः। परिभोक्ता कृमिर्भवति कीटो भवति मत्सरी।।**[16]

गौरी अतिथिमहत्तां लक्ष्यीकृत्य स्वयमेव तदाश्रमाद्बहिर्गन्तुं वाञ्छति। तस्मिन्नेव क्षणे शिवो ब्रह्मचारीवेषं परित्यज्याऽऽत्मनो वास्तविकरूपमाश्रित्य मन्दस्मितं कृत्वा तां पार्वतीं जग्राह–

**इति गमिष्याम्यथवेति वादिनी चचाल बाला स्तनभिन्नवल्कला।**

**स्वरूपमास्थाय च तां कृतस्मितः समाललम्बे वृषराजकेतनः।।**[17]

**व्यवहारकुशलता तर्कशक्तिश्च नार्याः**– व्यवहारशालीनताप्रसङ्गे कस्यचिदपि तर्कस्य च सम्यक्प्रत्युत्तरविषये नारी विशिष्टा भवति। सा कुत्रापि शालीनताभङ्गनं न करोति न च तर्कं श्रुत्वा मौनञ्च धारयति। यदा ब्रह्मचारीरूपधारीशिवः शिवविषये महदालोचनां करोति तदा पार्वती क्रुद्धा सती शिवं प्रति स्वभावनां प्रकटयन्ती कथयति यन्निश्चयेन त्वं यथार्थतः शिवं न जानासि अस्माद्धेतोर्मामेवम्ब्रवीषि। मूढा महानुभावानामसाधारणं चरित्रं तत्त्वतोऽज्ञात्वाऽशक्ताः सन्तो निन्दां प्रकुर्वते।[18] शिवविषयकेऽमङ्गलाभ्यासरतिप्रभृतिप्रसङ्गे सा कथयति न्यायपूर्वकं यदापत्तिपरिहारार्थिना ऐश्वर्यकामेन वा गन्धमाल्यादिकं मङ्गलं सेव्यते। लोकशरणसाधोर्निरभिलाषस्य तत्पुरुषस्य हरस्य तृष्णादूषितान्तःकरण–वृत्तिभिर्मङ्गलैः किं प्रयोजनम्? शिवस्तु कदापि विपद्ग्रस्तो न भवति स त्वेतावान् शक्तियुक्तो वर्तते यत्स एकाकी एव समस्तलोकं रक्षितुं प्रभवति। ऐश्वर्यस्यापि कामना तस्य नास्ति यतः स पूर्णतया निष्काम्यस्ति, अत एव तस्य नास्ति प्रयोजनमेभिर्मङ्गलप्रदैर्वस्तुभिः। शिवस्य तु एवंविधो महिमा यत्स दरिद्रः सन्सम्पत्तिकारणं श्मशानाश्रयो भवन् लोकत्रयपतिर्भयङ्कराकारः सन् सौम्यरूप इत्युच्यते। अस्मात्कारणाद् हरस्य तत्त्ववेत्तारो न विद्यन्ते[19] अर्थाद् विरोधिगुणैः समन्वितं शिवं सामान्यजना ज्ञातुं शक्नुवन्ति न। शिवस्य वास्तविकं रूपं तस्याऽऽकारैर्न ज्ञायते। तस्य शरीरं भूषणैरुद्भासते बद्धभुजङ्गं वा स्याद्धस्तिचर्मालम्बि क्षौमधारकं वा स्यात्कपालयुक्तमथवा चन्द्रमुकुटं भवेदिति न निर्धार्यते[20] अर्थाद् जगद्रूपस्याष्टमूर्त्तेः शरीरं केनापि निश्चेतुं न शक्यते।

ब्रह्मचारी 'अलक्ष्यजन्मता' इत्युक्त्वा शिवस्य कुलीनताविषयकः सन्देहोऽकरोत्तद्विषये पार्वती तस्मै पौराणिकमुत्तरं ददती कथयति यद्धे ब्रह्मचारिन्! दूषणं वक्तुमिच्छतापि नष्टस्वभावेन भवता शङ्करस्य विषये एवं वचनं सम्यगुक्तम्। यं शिवं ब्रह्मणोऽप्युत्पत्तिस्थानमुदाहरन्ति स शिवः केन प्रकारेण लक्ष्यजन्मा भविष्यति, न कथमपीत्यर्थः। पार्वती तु शिवेऽत्यासक्ता तस्माल्लोकचिन्ता तस्या नासीद्यतो हि स्वेच्छाव्यवहारी लोकनिन्दां न विचारयति–

**अलं विवादेन यथा श्रुतस्त्वया तथाविधस्तावदशेषमस्तु सः।**

**ममात्र भावैकरसं मनः स्थितं न कामवृत्तिर्वचनीयमीक्षते।।**[21]

**नार्याश्चरित्रम्**– कुमारसम्भवस्य पञ्चमे सर्गे नार्या विशिष्टं चरित्रमुटङ्कितं कालिदासेन। नारी कोमलाऽऽ–ज्ञाकारिणी सौन्दर्यशालिनी प्रकृतिदत्तचित्ता प्रेमचित्ता च भवति। पार्वत्याश्चरित्रे एतत्सर्वे गुणा दृष्टिगोचराः सन्ति।

आज्ञापालनगुणात्साऽऽस्ससखीमुखेन तपोनियमार्थं तातहिमालयं स्वस्य वनवासं याचितवती। सौन्दर्यवशात्तन्मुखं जटाभिरपि सुन्दरमभवत्। तपस्यायै सा स्वहावभावादिकं सूक्ष्मासु लतासु चञ्चलां दृष्टिञ्च मृगीषु न्यक्षिपन्। येन प्रकारेणाऽम्बा स्वसुतं दुग्धं पाययित्वा संवर्धयति तथैव सा तपोवनस्थितान्लघून्पादपान्स्वयमानीतेन घटजलेनासिञ्चत्। पार्वती मृगाणामनन्यं विश्वासमात्मीयताञ्चावलोक्यौत्सुक्येनाग्रे उपस्थितानां सखीनां नयने तेषां नेत्रैः सह माति स्म। यस्मिन्तपोऽरण्ये गौरी न्यवसत्तत्तस्यास्तपसः प्रभावेणातीव पवित्रमभवत्। जन्मजातविरोधिनो व्याघ्रादयः प्राणिनोऽपि स्वस्वपारस्परिकं वैरं विहाय प्रेम्णा व्यवहर्तुमारभन्त तत्रस्था वृक्षाः स्वकीयैः फलैरतिथीनां सत्कारमकुर्वन्। आश्रमस्था मुनयोऽपि नियमतः अग्निहोत्रादिकञ्चक्रुः। एवं सकलं वायुमण्डलमेव पवित्रं बभूव।

पार्वत्याः सौन्दर्यमद्भुतमेवासीन्नूनम्। सूर्यकिरणैः सन्तप्तमपि पार्वतीमुखं मलिनतां नागच्छत्। यथा सूर्यस्य तापात्कमलं न म्लायत्यपितु विकसनं भूत्वा नूतनां शोभां धारयति[22] तथैव पार्वतीमुखं सूर्याभिमुखं सततं निरीक्षणेन किञ्चिन्मात्रमपि कृष्णवर्णं नाभूत्प्रत्युत अधिकां शोभामेव प्राप्तवान्। सूर्यातपप्रभावेण नेत्रप्रान्तयोरुत्पन्नं कृष्णत्वं मुखसौन्दर्यवर्धकमेवाऽऽसीत्। पार्वती वर्षाकालेऽप्यनावृते स्थाने तपश्चरति स्म, अतः आकाशात्पतन्तो जलबिन्दवः प्रथमं तस्या नेत्रलोमसु पतन्ति स्म, तेषां घनत्वात्तत्रैव कञ्चित्कालं विरमन्ति स्म। तत्पश्चात्तेभ्यो निपत्य तस्या ओष्ठस्योपर्यतिष्ठन्। ओष्ठाच्च निपत्य ते पार्वत्याः स्तनयोरुपर्यपतन्। तयोः काठिन्यादुन्नतत्वाच्च ते चूर्णिता अभवन्। तदनन्तरं ते तस्या उदरस्य त्रिवलीष्वपतन्। एवं पतन्तः स्थाने स्थाने विरमन्तश्च ते जलबिन्दवश्चिरेण तस्या नाभिं प्राप्नुवन्ति स्म। नाभ्याः गाम्भीर्यात्ते पुनः न निर्गच्छन्ति स्म। उक्तं च कविना–

**स्थिताः क्षणं पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः।**

**वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिं प्रथमोदबिन्दवः।।**[23]

पार्वती दयाभावसंयुक्ताऽऽसीत्। हेमन्तर्तोः पौषमासे यदा हिमपातकारी वायुर्वाति स्म तदापि सा पार्वती रात्रावतिशीतले नीरे एव निवसति स्म। अनेन प्रकारेण तस्यास्तपो ववृधे। तपस्यायाः कारणात्तस्या हृदयं करुणभावसम्पन्नं जातम्। अतः सा यदा रात्रावग्रे वियुक्तामाक्रन्दन्तञ्च चक्रवाकयुगलं ददर्श तदा तस्योपर्यतिदयां प्रकटीकरोति स्म। ब्रह्मचार्यपि पार्वत्याः प्राणिस्नेहं प्रकटयन्कथयति यदतिपरिचयाद् धृष्टा इमे मृगा होमक्रियार्थमानीतान्त्वद्ध-स्तस्थितान्कुशान्बलादाकृष्य खादन्ति। एषां मृगाणां पूर्वोक्तानपराधान्विलोक्य त्वं कुपिता तु न भवसि ? हे कमलाक्षि ! इमे मृगास्स्वचञ्चलैर्नेत्रैस्त्वन्नयनसादृश्यमभिनयन्तीव।[24]

पार्वत्याश्चरित्रं पवित्रमासीत्तस्माद्ब्रह्मचारी कथयति यद्धे गौरि ! त्वं तपश्चर्यां कृत्वाऽर्थकामौ विहाय केवलं धर्ममेवाचरसि, अतः तवातिपावनानि चरित्राणि दृष्ट्वा प्रतीयते यद् धर्मार्थकामानां मध्ये धर्मस्यैव प्राधान्यमस्ति।[25] पार्वती आभूषणप्रिया नारी अस्ति किन्तु युवावस्थायामेव तयाऽऽभूषणानि परित्यज्य स्थविरभावोचितं वल्कलवस्त्र-मनर्थकमेव प्रतिभाति। यथा चन्द्रेण नक्षत्रैश्च परिपूर्णा रात्रिः सायं सन्ध्यायामेवारुणोदयं गन्तुं न शक्नोति तथैवास्यां युवावस्थायामेवाऽऽभूषणानि परित्यज्य तया वल्कलधारणं तपश्चरणञ्चोचितं न प्रतिभाति। यथोक्तं कविना–

**किमित्यपास्याभरणानि यौवने धृतं त्वया वार्धकशोभि वल्कलम्।**

**वद प्रदोषे स्फुटचन्द्रतारका विभावरी यद्यरुणाय कल्पते।।**[26]

## सन्दर्भाः


1. बाणः, हर्षचरितम्, भूमिकाश्लोकः - 13
2. स्वभाव एष नारीणां नराणामिह दूषणम्। अतोऽर्थान्न प्रमाद्यन्ति प्रमदासु विपश्चितः।।
अविद्वांसमलं लोके विद्वांसमपि वा पुनः। प्रमदा ह्युत्पथं नेतुं कामक्रोधवशानुगम्।। - मनुस्मृतिः, 2.213-214
3. कालिदासः, कुमारसम्भवम्, 5.1
4. तत्रैव, 5.4
5. तत्रैव, 5.5
6. तत्रैव, 5.62
7. तत्रैव, 5.64
8. तत्रैव, 5.53
9. तत्रैव, 5.16
10. मनुस्मृतिः, 2.156
11. कुमारसम्भवम्, 5.19
12. वदन्ति अपर्णेति च तां पुराविदः। - तत्रैव, 5.28
13. तत्रैव 5.31
14. यतः सतां सन्नतगात्रि सङ्गतं मनीषिभिः साप्तपदीनमुच्यते। - तत्रैव, 5.39
15. न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्। - तत्रैव, 5.83
16. मनुस्मृतिः, 2.200, 201
17. कुमारसम्भवम्, 5.84
18. अलोकसामान्यमचिन्त्यहेतुकं द्विषन्ति मन्दाश्चरितं महात्मनाम्। - तत्रैव, 5.75
19. न सन्ति याथार्थ्यविदः पिनाकिनः। - तत्रैव, 5.77
20. न विश्वमूर्त्तेरवधार्यते वपुः। - तत्रैव, 5.78
21. तत्रैव, 5.82
22. मुखं तदीयं कमलैरिव दधौ। - तत्रैव, 5.21
23. तत्रैव, 5.24
24. तवाक्षिसादृश्यमिव प्रयुञ्जते। - तत्रैव, 5.35
25. अनेन धर्मः सविशेषमद्य मे त्रिवर्गसारः प्रतिभाति भाविनि। - तत्रैव, 5.38
26. तत्रैव, 5.44



आचार्यः, संस्कृतविभागः,
जयनारायणव्यासविश्वविद्यालयः,
जोधपुरम्-342001




वर्ष : 47 अङ्क : 2
अप्रेल–जून, 2022

ISSN-2249-9296

# संस्कृतसाहित्ये पाककला

**डॉ. मधुबाला शर्मा**

किं नाम कलेति सन्दर्भे प्राप्यते यत् –''शक्तो मूकोऽपि यत् कर्तुं कलासंज्ञं तु तत् स्मृतम्'' इति कलाविषये शुक्राचार्येण परिभाषितम्। मूकजनोऽपि स्वगुणैः कर्मकौशलैश्च यामभिव्यक्तिं कर्तुं समर्थस्सा कला नाम्ना ज्ञायते। भिन्न–भिन्न स्वभावशीलो हि मनुष्यः स्वरुच्यनुसारं कार्ये प्रवृत्तो भूत्वा सः प्रसन्नतां सफलताञ्च प्राप्नोति। अतः निजहृदयप्रीत्यनुकूलकर्मचयनमेव साफल्यस्य मूलमन्त्रोऽस्ति। यदि कोऽपि जनः स्वमनोवृत्त्यनुसारं कस्याश्चिद् कलाया अभ्यासं करोति तर्हि सः तस्यां कलायां दक्षो भवति तथा च **कलाकारेति** संज्ञया सम्बोद्ध्यते। विषयेऽस्मिन् शुक्राचार्येण कथितं यत्–

**यां यां कलां समाश्रित्य निपुणो यो हि मानवः।**
**नैपुण्यकरणे सम्यक् तां तां कुर्यात् स एव हि।।**[1]

कला द्विविधा परिगणिता – उपयोगिनी कला ललितकला च । उपयोगिनीकलाया जीवनोपयोगिसंसाधनानां विकासः सञ्जायते। स्वर्णकारः, अयस्कारः, कुम्भकारः, कान्दविकः, इत्यादीनां कार्यदक्षता जीवनोपयोगिकलासु स्वीक्रियते इत्थं जीवनोपयोगिनीकलाक्रमे स्वर्णकला–पात्रनिर्माणकला–पाककलादीनां गणना कर्तुं शक्यते।

ललितकलायां हृदयाह्लादकारिण्यः क्रियाः सम्पाद्यन्ते । यथा–नृत्यं, गीतं, चित्रं, काव्यमित्यादयः। एवं तस्याः वर्गीकरणे ललितकलायाः पञ्चभेदाः सन्ति – वास्तुकला, मूर्तिकला, चित्रकला, संगीतकला, काव्यकला च ।

काव्यनिर्मातुः कृते यथावसरं वर्णनार्थं एतासां कलानां परिज्ञानमावश्यकम्। एतेन सः कविर्हास्यतां नोपयाति अतएव कथितम्– ''लोकशास्त्रकाव्याद्यवेक्षणात् निपुणता''[2]

आचार्यमम्मटस्य अनेन कथनेन सिद्ध्यति यत् काव्यरचनायाः कृते सर्वेषु शास्त्रेषु सर्वासु कलासु च पारङ्गतता आवश्यकी यथास्थानं तत्तच्छात्राणां तत्तत्कलानां च वर्णनेन काव्यं रोचकं आह्लादकारी च भवति। महाकवयः स्वकृतिषु व्याकरण– कोश– आध्यात्मिकज्ञानं– राजनैतिकवार्ता– युद्धादीनां चर्चया सहैव लोके प्रचलितस्य पाकस्यापि सुन्दरं प्रतिपादनं कृतवन्तः।

काव्य– नाटक– कथा– आख्यायिका इत्यादिषु सम्पूर्णकाव्यविधासु पाककलायाः चारुचित्रणं प्राप्यते। शास्त्रे वर्णितासु चतुःषष्टिकलासु पाककला महत्त्वपूर्णं स्थानं लभते। भोजप्रबंधे वर्णितमस्ति यत् अखिललोके त्रयः

पदार्था एव रुचिकराः सन्ति तेषु प्रथमः इक्षुविकारः अर्थात् गुडशर्करादिनिर्मितं मिष्टान्नं, द्वितीया कविवाक्, तृतीयः कामिनीकटाक्षश्च।

अधुना जिज्ञासा भवति किं नाम पाक इति। भोज्यपदार्थस्य चुल्लिकायां अधिश्रयणात् अवश्रयणपर्यन्तं पूर्वापरीभूतसम्पूणक्रियासमूहः '**पाक**' इति नाम्ना ज्ञायते। यथा साहित्यदर्पणे उल्लिखितमस्ति–

**'अधिश्रयणावाश्रयणादिपूर्वापरीभूतो व्यापारकलापः पाकादिशब्दवाच्यः।'**[3]

स्मृतिकारैः सुन्दरदृष्टान्तेन निगद्यते यत् – ''स्थालीमार्ज्जनाद्योदनपरीक्षान्तो व्यापारनिचयः पाकः''। इत्थं ओदननिर्माणाय पात्रस्वच्छीकरणं चुल्लिकायां स्थापना, तदनन्तरं परीक्षणञ्च इति सकलक्रियासमूहः 'पाक' नाम्ना अभिधीयते।

**पाकः सप्तविधः भवति–**

**भर्ज्जनं तलनं स्वेदःपचनं क्वथनं तथा। तान्दूरं पुटपाकश्च पाकःसप्तविधो मतः।।**[4]

1. **भर्ज्जनम्** – शाकस्य धान्यस्य वा साक्षात् अग्नौ पाकक्रियायां भर्ज्जनं भवति हिन्दी भाषायां 'भूनना' इति कथ्यते।
2. **तलनम्**– 'तलनं स्नेहद्रव्ये' कस्यापि खाद्यपदार्थस्य घृते स्नेहे वा तलनमिति, यथा– अपूप–पक्ववटिकादीनां तलनम्।
3. **स्वेदः**– 'स्वेदनं अग्न्युत्तापे बाष्पक्रियया पचनं स्वेदः' इत्युच्यते। यथा– इडली खमणढोकलादिखाद्यपदार्थाः स्वेद्यन्ते।
4. **पचनम्**– 'पचनं जले' यथा ओदनादीनां जले रन्धनं पाकः।
5. **क्वथनम्**– 'क्वथनं सिद्धद्रव्यरसग्रहणे' अर्थात् दाली, तेमनादीनां औषधादीनां वा क्वथनम् ।
6. **तान्दूरम्**– 'तान्दूरं द्वारबद्धतप्तयन्त्रे' यन्त्रं उष्णं कृत्वा भोज्यपदार्थानां पाकः। अत्र तान्दूरीरोटिकायाः वटिकायाश्च संकेतः प्राप्यते।
7. **पुटपाकः**– पुटपाकः अर्धादूर्ध्वाग्नितापे ज्ञेयः' यथा– मृत्तिकायां उपलानां मध्ये बाटिकायाः, भण्टाक्याः पुटपाकः क्रियते।

सामान्यरूपेण पाकक्रिया पूर्वाभिमुखी उत्तराभिमुखी वा भवेत् इति मन्यते। विविधदिशामुखी पाकक्रिया विभिन्नफलप्रदात्री भवतीति प्रमाणं प्राप्यते।

**अग्न्याशाभिमुखे पक्वममृतान्नं विजानता। पूर्वामुखी धर्म्मकामः शोकहानिश्च दक्षिणे।।**

**श्रीकामश्चोत्तरमुखे पतिकामश्च पश्चिमे। ऐशान्याभिमुखे पक्त्वा दरिद्रो जायते नरः।।**

ब्रह्मवैवर्तपुराणे भणितमस्ति यत् पाकक्रियार्थं नित्यं नूतनम् अथवा पूर्वपाकात् परं प्रक्षालितं निर्मलं पात्रं प्रयोक्तव्यमिति।

**नित्यं नूतनभाण्डेन कर्त्तव्यःपाक एव च। अथवा पक्षपर्य्यन्तं ततस्त्याज्यं मनीषिभिः।।**[5]

यदा चुल्लिकायां पात्रं स्थापयित्वा पाकक्रिया क्रियते तदा पात्रस्य अधोभाग: कृष्णवर्णीयो जायते। प्रक्षालनावसरे भूमौ तस्य पात्रस्य वर्तुलं तिर्यक् वा चिह्ना: भूस्वरूपिण्या: नायिकाया: मुखे अतीव सुशोभिता भवन्ति। एतादृशं वर्णनं महाकविना शूद्रकेण मृच्छकटिके कृतम्-

**''लौहकटाहपरिवर्तनकृष्णसाराकृतिविशेषका इव अधिकतरं शोभते भूमि:।''**[6]

पाककर्ता इत्यस्य समानार्थका: सूपकार:, बल्लव:, आरालिक:, आन्धसिक:, सूद: इत्यादय: शब्दा: कोशेषु समुपलभ्यन्ते। तथा च पाकस्थानस्य कृते रसवती-महानस-प्रभृतीनि नामानि सन्ति। यथाहि अमरकोशे प्राप्यते-

**.............. रसवत्यां तु पाकस्थानमहानसे।**

**पौरोगवस्तदध्यक्ष:सूपकारास्तु बल्लवा:।।**[7]

अत्र ध्यातव्यमस्ति यत् अज्ञातवासे यदा पाण्डुपुत्रभीम: विराट्देशे पाचकरूपेण कार्यं कृतवान् तदा तस्य नाम **'बल्लव:'** आसीत्। वाचस्पत्यमिति कोशे पाचकस्य पर्यायरूपेण सूपकार-शब्दस्य प्रयोग: प्राप्यते। शब्दसागरेऽपि पाककर्ता इत्यर्थे 'सूपकार:' उल्लिखितोऽस्ति।

मृच्छकटिके शूद्रकेण पाचकार्थे 'सूपकार:' तथा च पाकस्थानस्य कृते महानसमिति प्रयुक्तम्-

**''बहुविधाहार-विकारं प्रसाधयति सूपकार:।''**[8]

शिवराजविजये पाचक: 'सूद:' इति नाम्ना चित्रितोऽस्ति। **पद्मिनी**गद्यकाव्ये मोहनलालपाण्डेय: पाचकं बल्लव:, प्रधानपाचकं पौरगव: तथा पाकस्थानं रसवती-प्रभृतिभि: शब्दै: प्रतिपादितवान्। वर्णनेनानेन पाण्डेयस्य कोशज्ञानं प्रस्फुटितं भवति।

पाकशालायां महिलानामधिकारो विशेषत: विलोक्यते। व्यञ्जननिर्माणे प्रीत्या तस्या: अधिकतर: समय: तत्रैव व्यतीतो भवति। तां धारणामालक्ष्य पाकगृहस्य प्रो. ताराशंकरशर्मपाण्डेयेन हास्यकरं सुन्दरं चित्रणं प्रस्तुतम् -

**शून्यं पाकगृहं विलोक्य गृहिणी ब्रूते**
**पते ! पच्यतां**
**कार्यव्यापृतिकोऽस्मि तत् किमपि भो:**
**कान्ते! त्वया पच्यताम्।**
**वारी ते मम नोऽद्य साधु कुरुतात्**
**कार्यं विभक्तं त्वया।**
**काण्डाकाण्डकथा सदैव महिला पूज्येति ते कथ्यते।।**

पाककर्ता अथवा येन जनेन आजीविकारूपेण पाकक्रिया स्वीकृता स: व्यक्तिविशेष: 'सूपकार:' नाम्नानेन सम्बोध्यते।

संस्कृते 'दाली' इत्यस्य पर्याय: सूप: यतोहि सुखेन पातुं शक्यते इति सूप:। **राजघण्टु** ग्रन्थे निगदितं यत् दलितानां माष-मुद्गादीनां रस: सूप: कथ्यते-

**''विदलं माषमुद्गादि पक्कं सूपाभिधानकम्''**[9]

**भावप्रकाशे** दालीपाकविधिः एवं भणितः –

**दलितन्तु शमीधान्यं दालिद्दाली स्त्रियामुभे।**
**दाली तु सलिले सिद्धा लवणार्द्रकहिङ्गुभिः।।**
**संयुक्ता सूपनाम्नी स्यात् कथ्यते तद्गुणा अथ।**
**सूपो विष्टम्भको रुक्षः शीतन्तु स विशेषतः।**
**निस्तुषो भृष्टसिद्धः स लाघवं सुतरां व्रजेत्।।**[10]

पाचनदृष्ट्या मुद्गदाली लघुत्वं माषदाली च गुरुत्वं भजते। अतः मुद्गदाल्याः सूपः सुपाच्यः आरोग्यप्रदः च भवति। अस्य प्रमाणं **चरकग्रन्थे** लभ्यते–

**स्वभावाल्लघवो मुद्गास्तथा लावकपिञ्जलाः। स्वभावाद् गुरवो माषा वराहमहिषादयः।।**

**सुश्रुतेऽपि** प्रतिपादितमस्ति यत् पथ्यरूपेण मुद्गदाल्याः सेवनं सर्वोत्तमं–

**''ज्ञेयः पथ्यतमश्चैव मुद्गयूषः कृताकृतः।''**

मुद्गदाली सुपाच्या भवति अतः सर्पिणीवत् रोगहन्त्री वर्तते। भोजप्रबन्धे अस्य शृंगाररसपूरितं निरूपणं विद्यते तद्यथा–

**मुद्गदाली गदव्याली कवीन्द्रवितुषा कथम्। अन्धवल्लभसंयोगे जाता विगतकञ्चुकी।।**[11]

यदा राजा भोजः ज्वरग्रस्तः अभवत् तदा वैद्यः पथ्याहारे मुद्गदालीं भोक्तुं निर्दिष्टवान् यतो हि मुद्गदाली सर्पिणी इव रोगविनाशिका वर्तते। दालीं खादितुमुद्यतो भोजः वैद्यमपृच्छत्– दाली वितुषा कथं सञ्जाता? प्रश्नस्यास्य सरसं प्रत्युत्तरं प्रदत्तं वैद्येन।

**मृच्छकटिके** सूपस्योल्लेखः एवं लभ्यते–

**मांसेन तिक्ताम्लेन भक्तं शाकेन सूपेन समत्स्यकेन।**
**भुक्तं मायात्मनो गेहे शालीयकूरेण गुडौदनेन।।**[12]

श्रीमद्भागवते सूपपायसापूपादीनां खाद्यपदार्थानां निदर्शनं मिलति, यथा –

**पच्यन्तां विविधाः पाकाः सूपान्ता पायसादयः।**
**संयावापूपशष्कुल्यः सर्वदोहश्च गृह्यताम्।।**[13]

शष्कुली हिन्द्यां 'जलेबी' इत्युच्यते तथा च **कुण्डलिकेति** पुरातनं भारतीयं नाम। सप्तदशशताब्द्यां 'गुण्यगुणबोधनी' नामके संस्कृतग्रन्थे अस्याः वर्णनं प्राप्यते शष्कुली (जलेबी) भारतस्य राष्ट्रीयमिष्टान्नरूपेण प्रथते। प्रातराशे दुग्धशष्कुल्याः सेवनं पुष्टिकरं मन्यते। भट्ट**मथुरानाथ**शास्त्रिमहोदयेन स्वकथायां जलेबी इत्यस्य कृते शष्कुली शब्दस्य प्रयोगः कृतः –

**''बालको द्रोणादेकां शष्कुलीम् आकृष्य मुखे अदात्, स्रवन्त्या लालया मिष्टरसेन च परिधानीय-मार्द्रमकरोत्।''**[14]

घृतपरिपूरितं पायसस्य सुन्दरं प्रतिपादनं कृतं महाकविना **श्रीहर्षेण** –

**यदादिहेतुः सुरभिः समुद्भवे भवेद्यदाज्यं सुरभिर्ध्रुवं ततः।**

**वधूभिरेभ्यः प्रवितीर्य पायसं तदोघकुल्यातटसैकतं कृतम्।।**[15]

महाकविशूद्रकेण पायसपानं सूक्तिरूपेण शिक्षितं यथा शीघ्रतया भोजनेन उष्णपायसपानेन वा जिह्वा दह्यते तथैव सत्वरतया अनवधानेनापि कार्यं भग्नं भवति। तत्र शकारस्य कथनमस्ति–

**''हन्त! उताम्यतेव पायसपिण्डारकेण अद्य मया आत्मैव निर्णाशितः।''**[16]

**मृच्छकटिके** मोदकापपूपादीनामपि सरसं प्रदर्शनं प्राप्यते–

बहुविधाहार–विकारमुपसाधयति सूपकारः। बध्यन्ते मोदकाः पच्यन्ते चापूपकाः।[17]

**नैषधीयचरिते** लड्डुकस्य सरसनिदर्शनं सहृदयान् आह्लादयति –

**घृतप्लुते भोजनभाजने पुरः स्फुरत्पुरन्ध्रीप्रतिबिम्बिताकृतेः।**

**युवा निधायोरसि लड्डुकद्वयं नखैर्लिलेखाथ ममर्द निर्दयम्।।**[18]

**शिवराजविजये** पाचकस्य कृते सूद– शब्दस्य प्रयोगो वर्तते। तत्र रसवत्यां भोज्यपदार्थानां पाचनोपयोगि–पात्राणाञ्च प्रतिपादनमस्ति। यथा शिवराजविजये उक्तम् –''क्वचिद् हरिद्रा, हरिद्रा, लशुनं, लशुनं, मरिचं, मरिचं, चुक्रं, चुक्रं, वितुन्नकं, वितुन्नकम्, शृङ्गवेरं शृङ्गवेरम्, रामकं रामकम्, मत्स्यण्डी मत्स्यण्डी, मत्स्याः मत्स्याः, कुक्कुटाण्डं कुक्कुटाण्डं, पललं पललम्, इति कलकलैर्बालानां निद्रा विदारयतः समीपे संस्थापित–कुतू–कुतूप–कर्करी–कण्डोल–कट–कटाह–कम्बि–कडम्बान् उग्रगन्धीनि मांसानि शूलाकुर्वतः, नखचम्पा यवागूः स्थालिकासु प्रसारयतः, हिङ्गुगन्धीनि तेमनानि तिन्तिडीरसैर्मिश्रयतः, परिविष्टेषु कलम्बेषु जम्बीर–नीरं निश्च्योतयतः, मध्ये मध्ये समागच्छतः ताम्रचूडान् व्यजनताडनैः पराकुर्वतः, त्रपुलिप्तेषु ताम्रभाजनेषु आरनालं परिवेषयतः सूदान्।[19]

राजस्थाने राज्ञां शासनकाले जयपुरप्रदेशे शासकैः सार्वजनिक**जेमन**मेव भट्टमथुरानाथशास्त्रिणा जयपुरवैभव–महाकाव्ये भूरिभोजनं भणितम्। भूरिभोजनं राजस्थानीभाषायां **'हेडा'** इत्युच्यते। तत्र अनामन्त्रितोऽपि कोपि नागरिकः आगन्तुं शक्तः। अत्र जयपुरवैभवकाव्ये जयपुरनगरस्य 'हेडा' भोजनं निगदितम्–

**प्रथमं प्रवेशद्वारि देयं भोजपत्रमिदं**

**भूरिभोज्यपेयं पटमण्डपथेक्ष्यताम्।**

**भो भो देहि मोदकान्**

**निधेहि भूरि कर्चुरिकाः**

**शीघ्रतां विधेहीत्यादिकौतुकमपेक्ष्यताम्।**

**पटवृतिछिद्रेभ्यो निरीक्षमाणनीचजनं।**

**निर्गमं प्रतीक्षमाणनापितं निरीक्ष्यतां।**

**रथ्याधूलिधोरणीषु हेडाभोज्यमानजनं।**

**जयपुरनगर'हेडा' भोजनमवेक्ष्यताम्।।**[20]

अस्मिन्नेव क्रमे जेमने कस्यचन बहुभोजिन: कृते परिवेषणप्रसंग: कियान् हास्यकरो जायते इति राजस्थानीय-कविना प्रो.ताराशंकरशर्मपाण्डेयेन रचिते '**केलिशून्यसौरभ**' शतके समुपलभ्यते तद्यथा-

**शून्यं पत्रदलं ममास्ति वटिका दाली च नैवास्ति भोः।**
**पूपान् भक्षय तात ! वच्मि भणितो धत्ते च सद्यो मुखे ।।**
**अन्यस्यैव कृते ददाति बहुशो किं नो त्वया श्रूयते ।**
**श्रुत्वा लड्डुकपात्रमेव धरते हृष्टोऽत्ति तातस्ततः।।**

अत्र भोजनप्रसंगेऽपि मधुरहास्यं सरलतया सम्पाद्यते कविना पाण्डेयेन एवमेव रसकपूरे लडडू-कचोरीकादीनां विषये उदितमस्ति-

**''स तु भोजनार्थन्निमन्त्रणीयः मोदककचोरिकाश्च भोजनीयाः''**[21]

पद्मिनीगद्यकाव्ये प्रतिनवबाणभट्टेन **मोहनलालपाण्डेयेन** राजस्थानीया पाककला उल्लिखिता। पाण्डेय: राजस्थानीय: आसीत् इत्यस्मात् स सुप्रसिद्धराजस्थानीयभोजनस्य दालीवाटिकादीनां सुन्दरं निरूपणं कृतवान्।

अत्र गोधूमचूर्णं, गुड़मिश्रितप्रियङ्गुचूर्णं, तथा च किलाटयुक्तं चणकचूर्णमिति 'चूरमा' नाम भोज्यस्य त्रयस्य चित्रणमस्ति।

पाण्डेयेन वाटिकाद्वयं वर्णितम्, एका किलाट-काजव-वाताद-परिपूरिता घृतनिमग्ना मिष्टवाटिका। द्वितीया च आलुकलायाद्रकमरीचिकामधुरामिश्रिता व्यञ्जन-वाटिका। मुद्गमाषचणकाढकीसम्मिलिता मिश्रदाली, तेमनं, मिश्रशाक: तथा च भिण्डहरितमरीचसन्धितमपि वाटिकया सह पक्तव्यमस्ति। ओदनावलेहपर्पटमपि प्रसिद्धराजस्थानीय-भोजनेऽस्मिन्ननिवार्यम्। प्रावृट्काले पारिवारिकगोष्ठीषु च उक्ता: सर्वे भोज्यपदार्था: विशेषतया पच्यन्ते।

पद्मिनी-उपन्यासे प्रतिपादिताया: पाककलाया: कमनीयं विवरणमित्थं वर्तते-

''हरितपलाशपत्रावलीषु द्रोणेषु च क्रमश: शर्करामिश्रितगोधूमचूर्णं, गुडान्वितप्रियङ्गुचूर्णं, सिताकिलाटिकामिश्रितं हरिमन्थचूर्णं, शुष्कद्राक्षाकाजववातादांकोलसितागर्भा घृतप्लुता मिष्टवाटिका, आलुकलायद्विदलमरीचार्द्रकशतपुष्पा-जीरकरामठलवणाजगन्धसौरभगर्भा यवचणकचूर्णवाटिका: मुद्गमाषमसूरचणकाढकीद्विदलनिर्मितं सोपस्करं सूपम्, सर्वव्यजनसहितं तेमनम्, आलुगोजिह्वारक्ताङ्गकलायसिम्बामूलकवास्तुपालकवृन्ताकमरीचार्द्रकमिश्रितं शाकम्, भिण्डकहरितमरीचसन्धितम्, हरितधान्यकावलेहम्, पक्वाणुब्रीही:, पर्पटजम्बीरकश्चेति, क्रमश: सर्वासुभोजनसामग्रीषु परिवेषकै:, परिवेषितासु ऊं नम:पार्वतीपतये जयतु जयतु भगवानेकलिङ्ग इत्युच्चारणपूर्वकन्ते भोक्तुमारप्सत''[22]

राजस्थाने प्रियङ्गुसेवनं विशेषतया प्रसिद्धम्। अत्रस्थेभ्य जनेभ्य: घृतगुडप्लुतं प्रियङ्गुखिचुडं, दध्ना सह प्रियङ्गुरोटिका च बहु रोचते ।

प्रो. महावीरप्रसादसारस्वत रचिते **करणीचरितामृतमिति** काव्ये ग्राम्यांचले प्रियङ्गुप्रियताया: रुचिरं चित्रणं प्राप्यते-

**ग्रामात्तदानीं करणी सुबाला कण्डोलमध्ये दधिकुण्डिका च।**
**वज्रान्नरोटी: जनकाय धृत्वा भोज्यं प्रदातुं विपिनं प्रतस्थे।।**[23]

इत्थं नैककविभिः सुचित्रितास्ति संस्कृतसाहित्ये पाककला। अनेन चित्रणेन प्राचीनार्वाचीनकाले प्रचलितभोज्यपदार्थानां, मिष्टान्नानां लवणीयपदार्थानां, पाकपात्राणां, पाकविधीनां च बोधो भवति, तत्सम्बद्धकोशज्ञानस्य अभिवृद्धिरपि जायते। एतदतिरिच्य क्षेत्रविशिष्टपाकपरम्परायाः नानाविधः परिचयोऽपि संस्कृतसाहित्ये प्राप्यते।

## सन्दर्भाः -


1. कल्याण–शिक्षांकः पृ. सं. 137
2. काव्यप्रकाशः –1/3
3. साहित्यदर्पणे द्वितीयपरिच्छेदः
4. क्षेमकुतूहलम्– 1.37
5. ब्रह्मवैवर्तपुराणम्
6. मृच्छकटिकम्–1
7. अमरकोशः–2/9/27
8. मृच्छकटिकम्– 4
9. राजनिघण्टुः
10. भावप्रकाशः
11. भोजप्रबन्धः –142
12. मृच्छकटिकम् –10/29
13. श्रीमद्भागवतम् –10/24/26
14. 'अनादृता' कथा
15. नैषधीयचरितम् –16/70
16. मृच्छकटिकम् – 9
17. मृच्छकटिकम् – 4
18. नैषधीयचरितम् –16/103
19. शिवराजविजयम्–½
20. जयपुरवैभवम्–उत्सववीथी
21. रसकपूरम् – 8
22. पद्मिनी – 1
23. करणीचरितामृतम् – 2/28



सहायकाचार्या साहित्यविभागे

जगद्गुरुरामानन्दाचार्य–

राजस्थानसंस्कृतविश्वविद्यालयः, जयपुरम्।




# गुग्गुलस्य औषधीयगुणाः

-डॉ. नन्दिता सिंघवी
डी. लिट्.

मानवस्य वनस्पतिभिः सह घनिष्ठसम्बन्धः सृष्टेः आदिकालतोऽद्यपर्यन्तमस्ति। मानवस्य सामाजिकार्थिक-सांस्कृतिकाध्यात्मिकजैविकविकासक्रमस्य सर्वेषु स्तरेषु आनुवांशिकपरिस्थितिषु च वनस्पतीनामद्वितीयं योगदानमस्ति। फलपुष्पेन्धनादिभिः वनस्पतीनां लोककल्याणे विशेषयोगदानमस्ति अतएव। अथर्ववेदे कथितम्- **गिरस्ते पर्वता हिमवन्तोऽरण्यं ते पृथिवि स्योनमस्तु।**[1] एतेषामपि च वनस्पतीनामुपयोगाः विविधरोगाणां चिकित्साय क्रियन्ते। शरीरमाद्यं खलु धर्मसाधनम् इति मत्वा ऋषयः मानवस्यारोग्यं स्वास्थ्यञ्च प्रति सचेता आसन् अत एव ते चिकित्साक्षेत्रे उत्कृष्टानुसंधानं कृतवन्तः। वेदेषु तेषां वनस्पतीनां वर्णनमुपलभ्यते येषां प्रयोगाः औषधिरूपेण क्रियन्ते। ऋषिभिः सुस्पष्टं प्रतिपादितं यत् सर्वा औषधयः शरीरस्थरोगान् अपसारयन्ति।[2] औषधयः राक्षसपिशाचादिरूपरोगान् नाशयन्ति।[3] ऋषयोऽन्यत्र प्रार्थयन्ते-

समग्रा ओषधीः........ पारयामसि पुरुषं दुरितादधि।[4] भिषजो मनुष्याः तेषां भैषजाय प्रयोगं कुर्वन्ति।[5] वनस्पतयः ओजसः स्रोतांसि भवन्ति[6] अतएव भैषजैः मरणासन्नमानवोऽपि स्वस्थीभूत्वा शतायुः भवति।[7] रुग्णपुरुषस्यारोग्यार्थमौषधिं प्रति ऋषिः प्रार्थयते- हे रोगनाशकाः औषधयः! युष्माकं यत् सामर्थ्यमस्ति तेन इमं पुरुषं रोगात् त्रायस्व। अहमौषधं रचयामि।[8] वेदेषु औषधीनां शतशः उल्लेखाः प्राप्यन्ते। एषु गुग्गुलः महत्तां धत्ते। चिकित्साविज्ञाने वनस्पतीषु गुग्गुलस्य महत्त्वपूर्णं स्थानमस्ति। गुग्गुलस्य बहूनि संस्कृतनामानि सन्ति- गुग्गुलुः, देवधूपः, जटायुः, कौशिकः पुरः कुम्भोलूखलकं महिषाक्षः पलंकषश्च। निषण्टुषु अयं 'मरुदेश्यः' इति कथ्यते। आंग्लभाषायामयं 'इण्डियन बडेलियम ट्री' इति कथ्यते। गुग्गुलः भारते अरबे अफ्रिकादेशे च उत्पद्यते।

भारते आसाम- राजस्थान-बङ्गाल-मैसूराणां शुष्कपर्वतीयक्षेत्रेभ्यः गुग्गुलः जायते। गुल्फोऽस्त्ययं, यस्य शाखा कण्टकाकीर्णाः भवन्ति। पर्णान्यस्य लघुनिम्बपत्राणीव भवन्ति। रक्तवर्णं पञ्चपक्ष्मयुक्तं प्रसूनमस्य मञ्जर्याः मध्यतः निर्गच्छति। तनुबदरीफलमिवास्य फलं रेखात्रयात्मकं भवति। कोमीफेरा मुकुल (हुकर एक्स स्टाक्स)[9] इति भारतीय, बडेलियमस्य मुख्यं स्रोतोऽस्ति। प्रतिवृक्षं निर्यासः[10] रेजिनरूपे परिमाणोऽस्य 675-900 ग्राम परिमितो भवति। यः शीतकाले काण्डत्वचं विदीर्य्य पतन् निर्यासः रेजिनरूपेण एकत्रीक्रियते। अस्य संग्रहार्थं किमपि पात्रं नैव निधीयते केवलं भूमौ एव संगृह्यतेऽतएव गुग्गुले बहुकर्कटाश्मादयः प्राप्यन्ते। रेजिनः कृमिरूपे स्टलैक्टाइटी खण्डरूपे

वा निर्गच्छति यस्य वर्णः पीताभः कपिशः धूसरः हरितश्च भवति, रुचिः च तिक्तः गंधश्च बल्यसमः इव भवति। गुग्गुलस्य पञ्च जातयः सन्ति– महिषाक्षो महानीलः कुमुदः पद्मः हिरण्यश्च। एतेषां लक्षणानि सन्ति– भृङ्गाञ्जनसवर्णः महिषाक्षः महानीलस्तु बहुनीलः कुमुदः कुमुदाभः पद्मो माणिक्यसन्निभः हिरण्याख्यस्तु हेमाभः भवति। महिषाक्षो महानीलो गजेन्द्राणां कृते हितकरावुभौ। हयानां कृते कुमुदः पद्मश्च स्वस्त्यारोग्यकरौ भवतः, विशेषेण मनुष्याणां कृते कनकः परिकीर्तितः। केषांचिन्नृणां मतमस्ति यत् कदाचिन्महिषाक्षोऽपि मनुष्याणां कृते हितकारकः भवति। भावप्रकाशनिघण्टौ गुग्गुलस्य गुणाः वर्णिता इत्थम्–

**गुग्गुलुर्विशदस्तिक्तो वीर्योष्णः पित्तलः सरः।**
**कषायः कटुकः पाके कटू रूक्षो लघुः परः।।**
**भग्नसन्धानकृद्वृष्यः सूक्ष्मस्वर्यो रसायनः।**
**दीपनः पिच्छिलो बल्यः कफवातव्रणापचीः।।**
**मेदोमेहाश्मवातांश्च क्लेदकुष्ठाममारुतान्।**
**पिडकाग्रन्थिशोफार्शो गण्डमालाकृमीञ्जयेत्।।**
**माधुर्याच्छमयेद्वातं कषायत्वाच्च पित्तहा।**
**तिक्तत्वात्कफपित्तेन गुग्गुलुः सर्वदोषहा।।**
**स नवो बृंहणो वृष्यः पुराणस्त्वतिलेखनः।**
**स्निग्धः काञ्चनसंकाशः पक्वजम्बूफलोपमः।।**
**नूतनो गुग्गुलुः प्रोक्तः सुगन्धिर्यस्तु पिच्छिलः।**
**शुष्को दुर्गन्धिकश्चैव त्यक्तप्रकृतिवर्णकः।।**
**पुराणः स तु विज्ञेयो गुग्गुलुर्वीर्यवर्ज्जितः।**[11]

गुग्गुलस्य सम्यग् गुणार्थी जनः अम्लं तीक्ष्णमजीर्णं व्यवायं श्रममातपं मद्यं रोषञ्च त्यजेत्। गुग्गुलोः प्रयोग काले मद्य–सम्भोग–व्यायाम–धूपसेवन–क्रोधादयः निषिद्धाः सन्ति। अनुचितसेवनेनास्य यकृतफुफ्फुसादीनां हानिर्भवति। प्रयोगाधिक्येन मुखस्य शुष्कता नपुंसकता कृशता मूर्च्छा शरीरशिथिलता त्वचि रूक्षता च जायते।

महिषाक्षः महानीलः पद्मः कनकश्च यथाक्रमेण यूनानीग्रन्थेषु 'सकलवी', 'मुकुल–इ–आरब', 'मुकुल–इ–आजरक''मुकुल–ई–आहूद' इति नामभिः ज्ञायन्ते। पाश्चात्यलेखकैः भ्रमवशात् गन्धविरोजां शिलारसं च गुग्गुलुः इति मत्वा तस्मिन् विषये बहूनि निरर्थकानि दुरधिगम्यानि दीर्घवक्तव्यानि प्रकाशितानि।

गुग्गुलौ उड्डयनशीलं तैलं निर्यासः रालः केचित्तिक्तपदार्थाश्च भवन्ति। रसायनमस्य स्निग्धमुष्णं बल्यमाक्षेपनिवारकमार्त्तवस्रावकारि च भवति। औषधिरूपे गुग्गुलस्यानेकोपयोगाः सन्ति।

स्तम्भकोऽयं पूतिरोधी तीव्रः क्षुधावर्धकः वातानुलोमकश्चास्ति। गुग्गुलस्य प्रकृतिः उष्णत्वात् वातं शमयति। ओलियो–रेजिनानामिव रुधिरे श्वेताणूनां वृद्धिर्भवत्यनेन येन भक्षककोशिकाक्रिया उद्दीप्ता भवति। स्वेदककफोत्सारक–

मूत्रलस्येव कार्यमयं करोति। अयमार्तवजनकोऽस्ति। गर्भाशयोऽनेनोद्दीपितः भवति। रेजिनमस्य अन्तःव्रणे लोशनरूपे दन्तानां क्षरणे, दुर्बलदन्तमूले सति, पायरिया- उलूखल-चिरकारीतुण्डिकाग्रसनीशोधे कण्ठे व्रणे सति गण्डूषस्य कृते प्रयुज्यते। परागतज्वर-तीव्रचिरकारीपीनस-चिरकारीस्वरयंत्र शोध- चिरकारीश्वसनीशोध-क्षयादिषु ज्वलन्तस्य गुग्गुलस्य धूमः प्रयुज्यते। **सायणः** ''गुग्गुलुप्रसिद्धं धूपसाधनम्''[12] इति उक्त्वा वर्णनमस्य कृतवान्। देवपूजायां धूपे प्रयुक्तत्वादयं देवधूपः कथ्यते। अयं रक्षोहा इति कथ्यते यतोहि रक्षांसि हन्ति, तदर्थं धूपने प्रयुक्तः। यं मानवं गुग्गुलोः सुरभिः व्याप्नोति तं यक्ष्मादिव्याधयो न पीडयन्ति।[13] तथा एनं परकृतोऽभिशापो न स्पृशति।[14] **अग्निपुराणे** कथितम्- घृतगुग्गुल-होमे च सर्वोत्पातादिमर्दनम्।[15] भूतवेतालशान्तिस्तु गुग्गुलैरयुतेन च।[16] घृतगुग्गुलहोमाच्च असाध्यानपि साधयेत्।[17] गुग्गुलूः पीतानलघोऽक्षगन्धिः प्रमन्दनीत्याद्यौषधीनां हवनेन भीताः जलकृमयः विनश्यन्ति।[18] रक्तस्रावे तु वृक्षाणामयुताद् गुग्गुलोः शिवम्।[19] वैदिकसंहितासु गुग्गुलवृक्षः अग्नेः स्थानं निर्दिश्यते।[20] गुग्गुलः पलं मासं कषति हिनस्ति- मेदोघ्नत्वात् अति लेखनत्वात् अतएव पलंकषा इति कथ्यते।

अयं सिन्धुदेशजः समुद्रियश्च भवति। स्वास्थ्यरक्षणाय गुग्गुलः महत्त्वपूर्णः, अतएव अथर्ववेदे कथितम्- विष्वञ्चस्माद्ययक्ष्मा मृगा अश्वा इवे रते। यद्गुल्गुलु सैन्धवं यद्वाप्यसि समुद्रियम्।। उभयोरग्रभं नामास्मा अरिष्टतातये।[21]

अग्निपुराणे[22] विविधौषधिभिः सह गुग्गुलस्य चिकित्सकीयाः उपयोगाः प्राप्यन्ते। अस्य विशिष्टयोगाः सन्ति- योगराज-मेदोहर-कैशोर-गोक्षुरादि-जयोदशांग-धूपादिगुग्गुलवः। योगराजगुग्गुलौ प्रधानतः गुग्गुलः भवति, स वातशोथादौ सेव्यते। इत्थं चिकित्साविज्ञाने गुग्गुलस्य महत्त्वपूर्णं स्थानमस्ति। भारतीयवानस्पतिकसर्वेक्षणविभागेन भारते संकटग्रस्तपादपानां सूची निर्मिता। तत्र गुग्गुलोऽपि सम्मिलितः। अत एवास्य संरक्षणस्य महती आवश्यकता।

**प्रमाण-परिशिष्टः**

1. अथर्ववेदः, 12.1.11
2. यजुर्वेदः, 12.84
3. वनस्पतिः....... रक्ष पिशाचामपबाधमानाः- अथर्ववेदः, 8.7.15
4. तथैव, 8.7.19, 1अन्यत्र द्रष्टव्यम्- 4.37.1
5. तथैव, 8.7.26
6. ओज उद्भृतं वनस्पतिभ्यः यजुर्वेदः 29.53
7. तस्मामृतस्येमं बलं पुरुषं पाययामसि। अथ कृणोमि भेषजं यथासच्छतहायनः।। (अथर्ववेदः, 8.7.22)
8. तथैव, 8.7.5
9. गुग्गुलस्य वानस्पतिकभेदः
10. भाषायामस्यामर्थोऽस्ति 'गोंद' इति
11. कर्पूरादिवर्गः, 37-43
12. तैत्तिरीयसंहिता, 1.8.7.1, 1.8.9.1-2, मैत्रायणीसंहिता, 2.6.3, 4.3.8
13. अथर्ववेदः, 19.38.2
14. तथैव, 4.37.8

15. अग्निपुराणः, 321.6
16. तथैव, 321.9
17. तथैव, 322.3
18. अथर्ववेद, 4.37.3
19. अग्निपुराणः, 321.11
20. काठकसंहिता, 25.6, तैत्तिरीयसंहिता, 6.2.8.6, बौधायनश्रौतसूत्रम्, 4.1, 15.25, 16.22, आपस्तम्बश्रौतसूत्रम्, 7.2.51
21. अथर्ववेदः, 19.38.2-3
22. अग्निपुराणः, 285.37-38, 292.33-34, 299.12

सह-आचार्या,
संस्कृत-विभागाध्यक्षः, राजकीयडूँगरमहाविद्यालयः
बीकानेरम्।



# 'शतवार्षिकम्' प्रहसनम् : एकमनुशीलनम्

**डॉ. सरोजः**

गीर्वाणवाणीसंस्कृतभाषायाः नाट्यसाहित्यं गौरवपूर्णमस्ति। संस्कृतसाहित्यस्य समस्तविधाः मानवहृदयं परिस्फुरन् तस्य रंजने उत्कर्षे च समानरूपेण उपादेयाः सन्ति। नाट्यसाहित्ये सामाजिकजीवनस्य विविधरूपाणां भावानां च यथार्थसजीवाभिव्यक्तिः दृश्यते। दृश्यकाव्यस्य रूपकं - उपरूपकं चेति भेदद्वयम्। **रूपकं** तत्समारोपात् अर्थात् रूपयति अन्यस्य रामादेः रूपेणान्यान् नटाननुकरोतीति रूपकम्।

यथोक्तम्-

**अवस्थानुकृतिर्नाट्यं रूपं दृश्यतयोच्यते।**

**रूपकं तत्समारोपात् दशधैव रसाश्रयम्।।**[1]

अत्र रूपकस्य दशभेदानुपदिशति-

**नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः।**

**ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश।।**[2]

एषु दशरूपकेषु 'प्रहसनम्' रूपकस्य विशिष्टस्थानमस्ति। प्रहसनमेकं हास्यव्यंग्यप्रधानरूपकमस्ति। प्रकृष्टं हसत्यनेनेति प्रहसनम्। प्रकर्षेण दृश्यते विटादीनां चरितं यत्र तत् प्रहसनम्। प्रहसनं मानवजीवनस्य हास्यभावनयोः मंचीयरूपायनमस्ति यस्मिन् हास्यव्यंग्ययोः द्वयोः प्रमुखदायित्वं सहैव भवति। अत्र आकारगतन्यूनता, अल्पसमये तीव्राभिव्यंजना, अभिनयस्य सरलता, प्रमुखरूपेण हास्यरसस्य प्रधानता दरीदृश्यते। प्रहसनरूपकं दशविधरूपकेषु सर्वजनप्रियं भवति। प्रहसनमाध्यमेन सामाजिक-विसंगतिं प्रति स्वयमेव वैमुख्यभावः उद्भवति। भासकृत 'दामकप्रहसनम्' संस्कृतसाहित्ये **प्रथम**प्रहसनरूपेण प्रसिद्धमस्ति। हास्यव्यंग्ययोः कतिपयानि उदाहरणानि अत्र प्रस्तूयन्ते।

यथा '**चिपिटकचर्वणम्**' प्रहसने पत्युः स्वरूपवर्णनमत्र प्रस्तुतः-

**नमोऽस्तु पतिदेवाय ब्रह्मविष्णुस्वरूपिणे।**

**चतुर्मुखोऽसि कलहे ताडने च चतुर्भुजः।।**[3]

तथैव नारायणशास्त्रिकांकरप्रणीते '**प्रतिभाचमत्कारः**'- प्रहसने निरीक्षकशिष्ययोः वार्तालापः हास्यव्यंग्ययोः उत्कृष्टमुदाहरणमस्ति-

**निरीक्षकः** – अहो विलक्षणा ते प्रतिभा। उच्यतां व्याकरणे कस्य शिष्यः भवान्?

**सुरेशः**– स्वर्गीयश्रीमधुसूदनविद्यावाचस्पतिस्य।

**निरीक्षकः**– (साश्चर्यम्) अरे भवान् तु व्याकरणाचार्यः। निखिलानि च व्याकरणपुस्तकानि परिशील्य इदानीं भाषाविज्ञानविषये अनुसन्धानं क्रियते। पुनः कथम् उच्यते भवता 'विद्यावाचस्पतिस्य' इति अशुद्धः प्रयोगः? यतः अदन्तानाम् एव 'ङसः' 'स्यः' भवति, न तु इकारान्ताम्।

**सुरेशः**– (सगर्वम्) श्रीमन्तः। किं कदापि तेषां दर्शनं न कृतवन्तः भवन्तः।

**निरीक्षकः**– दर्शनं तु बहुवारं कृतवान् अस्मि।

**सुरेशः**– तर्हि पुनः कथं न ज्ञातं भवद्भिः यत् ते विद्यावाचस्पतिमहाभागाः अ- दन्ताः एव।

तेषां मुखविवरे एकः अपि दन्तः न आसीत्। अदन्तत्वात् एव मया अत्र 'ङसः' स्थाने 'स्यः' प्रयुक्तः।[4]

आचार्यविश्वनाथेन साहित्यदर्पणे प्रहसनरूपकस्य लक्षणं स्वरूपं च इत्थं प्रतिपादितम्–

**भाणवत्सन्धिसन्ध्यंगलास्यांगांकैर्विनिर्मितम्।**

**भवेत्प्रहसनं वृत्तं निन्द्यानां कविकल्पितम्।।**

**अत्र नारभटी, नापि विष्कम्भकप्रवेशकौ।**

**अंगी हास्यरसस्तत्र वीथ्यांगानां स्थितिर्नवा।**

**तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः।**[5]

तात्पर्यमिदमस्ति यत् प्रहसने मुखनिर्वहणसन्धी–सन्ध्यंगानि–दशलास्यांगानि–कविप्रतिभोत्थापित इतिवृत्तं एकांक – षड्विधहास्यरसाश्च भवन्ति।

अस्य प्रहसनरूपकस्य दशरूपकानुसारेण भेदत्रयं कृतम्– शुद्धं, संकीर्णं विकृतं च।

यथोक्तम्– तद्वत् प्रसहनं त्रेधा शुद्धवैकृतसङ्करैः।

शुद्धप्रहसनम्–

**पाखण्डविप्रप्रभृतिचेटचेटीविटाकुलम्।**

**चेष्टितवेषभाषाभिः शुद्धहास्यवचोन्वितम्।**[6]

उदाहरणं यथा – कन्दर्पकेलिप्रहसनम्।

विकृतप्रहसनम् – **कामुकादिवचोवेषैः षण्डकञ्चुकितापसैः विकृतम्।**[7]

यथा– कलिकेलिप्रहसनम्।

संकीर्णप्रहसनम्– **संकराद्वीथ्या संकीर्णधूर्तसंकुलम्।**[8]

उदाहरणस्वरूपे – धूर्तचरितम् प्रहसनम्।

प्रहसनरूपकस्य समाजे साहित्ये च विलक्षणं स्थानं वर्तते। हास्यरसप्रधाने रूपके भावानां वर्णनं प्रामुख्येन भवति। प्रहसने आनन्दमिश्रितं प्रस्तुतीकरणं, सजीवता, विकासोन्मुखता, कमपि अभिनवं सन्देशं प्रदर्शयति।

**श्री-श्री-जीवन्यायतीर्थप्रणीतं 'शतवार्षिकम्'** प्रहसनमेकं[9] व्यंग्य-प्रधान-प्रहसनं वर्तते। अस्मिन् प्रहसने हास्यव्यंग्ययोः मणिकाञ्चनसमन्वयोऽस्ति। अस्मिन् एकांकी-प्रहसने वैज्ञानिकाविष्काराणां दुष्परिणामस्य संक्षिप्तरूपेण घटना वर्णिता। पञ्चाननतर्करत्नसूनोः श्रीश्रीजीवन्यायतीर्थस्य मुख्यप्रयोजनं सम्पूर्णविश्वं इदमुपदेष्टुमस्ति चेत् मानवः वैज्ञानिकयन्त्रानायुधान् च स्वार्थाय विनाशाय च उपयोजयिष्यति तर्हि सम्पूर्णमानवजातेः समूलनाशः शीघ्रमेव निश्चितः, अतः उन्नतिकारकस्य विज्ञानस्य विध्वंसकस्वरूपं नियंत्रयन् अनन्तकालपर्यन्तं हर्षपूर्वकं जीवेत्, सर्वजनहिताय, सर्वजनसुखाय च उपयोजयेत्।

'शतवार्षिकम्' प्रहसनस्य प्रारम्भः नाट्यशास्त्रीयनियमानुसारेण द्वादशपदी नान्द्या[10] कृतः। अस्य नान्दी स्तुतिपरका वस्तुनिर्देशात्मकरूपा च वर्तते। मर्त्यमणिः नामको वैज्ञानिकः रखेटयन्त्रेण ब्रह्मलोकं प्रविशति, तस्यानुरूपं प्रहसनकारेण विहङ्ग इव नभे उड्डयितु मारुतेः अर्थात् हनुमतः स्तवनं कृतम्।[11]

मंगलाचरणानन्तरमवलगितप्रस्तावनारूपेण[12] सूत्रधार-विदूषकयोः मध्ये संलापः प्रस्तुतः। सूत्रधारस्य जानूद्भटघातवेगाद् मञ्चात् दूरं पतितस्य विदूषकस्य समता रखेटयन्त्रेण नभं पारयित्वा ब्रह्मलोकं प्राप्तवता मर्त्यमणिना सह कृत्वा हास्यात्मकशैल्यां प्रहसनस्य प्रथमाङ्कः प्रारभ्यते।[13] मर्त्यमणिः जीवित एव ब्रह्मलोकं याति, तदा तेन शंक्यते यत् सः नवादेशमागतः, सः जीवितः मृतो वा? अत्र मर्त्यमणेः कथनं हास्यरसं सृजति। यथा-

**मर्त्यमणिः-**

**किमहं मृतो जीवितो वा? (हस्तनाड़ीं परीक्ष्य) हूं हुम्, अधुनापि प्राणस्पन्दनमनुभूयते। (हृदि हस्तं दत्त्वा) अहो! सन्ति मे प्राणाः, तर्हि जीवामि।**[14]

आधुनिकयुगे संस्कृतशिक्षायाः अध्ययनाध्यापनं प्रति जनसामान्यस्य अभिरुचिः ह्रसिता। दैनन्दिनं संस्कृतभाषायाः स्थितिः पतितवती। वर्तमानकाले युवकयुवतिभिः संस्कृतभाषा आलोच्यते। संस्कृतभाषा संकीर्णा रूढिवादी च मन्यते। परन्तु प्रहसनकारेण संस्कृतस्य महिमा अभिव्यक्तः। संस्कृतभाषां प्रति जनसामान्यस्य दृष्टिकोणं मर्त्यमणि-माध्यमेन उद्घाटितम्। जनैः संस्कृतभाषा वृद्धनटीव उपहास्यात्मकदृष्ट्या दृश्यते। यथा मर्त्यमणिना संस्कृतभाषायां व्यंजयता कथितम्-

**गीर्वाणवाणी किल या तदानीं कान्तेव शान्तेरभवन्निदानम्।**
**सैवाधुना वृद्धनटीव लोकैरालोक्यते नर्मकटाक्षभङ्गया।।**[15]

अत्र वृद्धनट्या सह संस्कृतस्योपमा दर्शनीया। स्वर्गद्वारि मर्त्यमणि संस्कृतस्य महत्तां वर्णयन् प्रत्युत्तरमित्थं ददाति-

**पुरातनी चिरतरुणी युगयुगसञ्चारिणी मनोहारणी।**
**एषा भाषा जननी विश्वजनमूकताङ्कशमनी।।**[16]

अस्मिन् प्रहसने विज्ञानस्य प्रगतेः प्रतिकूलप्रभावस्य चित्रणं कृतम्। पृथिव्यां समस्तग्रहनक्षत्रेषु अर्थात् सम्पूर्णब्रह्माण्डे वैज्ञानिकाविष्काराणां विनाशकारी प्रभावः प्रदर्शितः।

मंगल-बुध-चन्द्र-शुक्रादयः ग्रहाः मानवद्वारा कृतैः विविधप्रकारकाणां भयानकास्त्रायुधानां यन्त्राणामाविष्कारैः स्वजीवनस्य सुरक्षादृष्ट्या चिन्तिताः भयग्रस्ताः च। विज्ञानविषये देवस्वरूपग्रहाः कथयन्ति-

**किमिदं विज्ञानं नाम येनामरा अपि मरणभयं भजन्ति।**[17]

वैज्ञानिकयन्त्रैः न केवलं मानवस्य अपितु समस्तग्रहनक्षत्राणां दुर्दशा कृता। कुजः अर्थात् मङ्गलः दारुणास्त्रेण कुब्जः कृतः। इमां वेदनां कुजः प्रकटयन् कथयति–

**कुब्जः कृतः कुजः सोऽहं दारुणास्त्रेण दारणात्।**

**अधोलोकात् समुत्क्षिप्तेनाङ्गवैकल्यकारणात्।।**[18]

मर्त्यमणेः रखेटात् निष्कासितात् तीव्रविद्युद्दामसमं कपिशज्योतिषो ग्रहाः भयभीताः। ते तद्दृष्ट्वा देवलोकेऽपि विप्लवस्य आशंकां कुर्वन्ति। विज्ञानबलेन निर्मितैः विध्वंसक-टङ्कैः ग्रहाः संतक्ष्यन्ते। अतः स्वसुरक्षायाः कृते सर्वे यथासंभवसुरक्षात्मकोपायान् कुर्वन्ति। ग्रहाणां भीत्या यत्र-तत्र पलायनं, रक्षणार्थं विविधोपायकरणं यथा चन्द्रस्य रक्षायै कण्ठे पृष्ठदेशे भाण्डद्वयलम्बनं[19], शुक्रस्य शिरस्त्राणार्थं मस्तके हण्डिकारोपणञ्च हास्यजनकमस्ति। हण्डिकायाः प्रशंसायामनुप्रासालंकारस्य शोभामाधुर्यता च दर्शनीये–

**हण्डिका चण्डिका चैव कथिता जगदम्बिका। दर्वी-मण्डनसंयोगादन्नाभावस्य खण्डिका।।**[20]

स्वार्थसिद्धये भक्षकोऽपि रक्षकः भवति। चन्द्रस्य सुरक्षायाः कृते राहुः कथयति

**सिंहोऽपि रक्षतिच्छागं स्वभोग्यं जम्बुकाननात्, सैहिकेयः परग्रासात्त्वां रक्षेदिति का क्षतिः।।**[21]

विज्ञानं मानवजीवनाय वरदानमस्ति। समस्तसुखसुविधानां जनकम्, अज्ञाननाशकं जगत्प्रकाशकं च विज्ञानं मानवस्य उन्नतये विकासाय च परमावश्यकमस्ति। वैज्ञानिकमर्त्यमणिना विज्ञानं प्रशस्यते–

**तामसप्रकृतिर्नाहं नवालोकप्रदर्शकः। विज्ञानं जगदज्ञाननाशकं मे प्रकाशकम्।।**[22]

परन्तु अस्य विज्ञानस्य अपररूपं विध्वंसकारि दुष्परिणामकं चापि वर्तते। वैज्ञानिकविद्युद्यन्त्रैः दूरादेव सम्पूर्णब्रह्माण्डस्य क्षतिः क्रियते। एतेषां यन्त्राणां कुप्रभावेण समस्तग्रहाणां दुरवस्था कृता–

**दूरात् क्षतानि कुरुते कायवक्षोमनांसि नः। विद्युद्दामक्षिपैर्यन्त्रणादायिभिः सदा।।**[23]

अपि च–

**कुजः कुब्जः कृतश्चन्द्रो मन्दभासो बुधोऽबुधः। कविः मविहतप्रायो राहुर्हाहारवै रतः।**[24]

एतत् यन्त्रविज्ञानम्। एतत् सदा सर्वत्र दुष्परिणामकं भवति। चेत् विज्ञानस्याविष्काराणां दुरुपयोगे नियन्त्रणं न कृतं तर्हि पृथिवी शीघ्रमेव ध्वस्ता अभविष्यत् तथा प्राणिमात्रस्य समूलनाशः अभविष्यत्। प्राणिमात्ररहित-पृथिव्याः किमस्तित्त्वम्। ब्रह्मणः माध्यमेन ग्रहाणां जीवनस्य रक्षणोपायेन सह प्रहसनकारेण उपहासयन् यन्त्रीयविज्ञानस्य दुष्परिणामः तीक्ष्णव्यंजनात्मकशैल्यामभिव्यक्तः–

ब्रह्मा–

**क्रियते चेन्न यन्त्रीयविज्ञानस्य नियन्त्रणम्। शतवर्षान्तरैः पृथ्वी नूनं ध्वस्ता भविष्यति।।**[25]

अपि च–

**यन्त्रविज्ञानमधुना परमोच्चकोटिमारूढमपि यदा तावदाणविकशक्तिस्फूर्जितं वज्रं निर्माय मनुजा मिथो मर्दनमिच्छन्ति, तदा पृथिवी शतवार्षिकमायुष्कालमपि न लप्स्यते।**[26]

श्री श्रीजीवन्यायतीर्थः विश्वं विज्ञानस्य पारस्परिकस्वार्थाय विनाशाय च अनुचितप्रयोगं प्रति सचेतयितुं वाञ्छति। मुख्यप्रयोजनेन सह प्रहसनकारः प्रहसनस्य प्रधानं स्वस्थमर्यादितहास्यरसं[27] स्रष्टुं सफलः जातः। अस्मिन् सन्दर्भे मर्त्यमणिकुजयोः वार्तालापः अत्र प्रस्तुतः-

**मर्त्यमणिः** – भो भूमिनन्दन।

**कुजः** – अलं मधुरालापेन। तिष्ठ तत्रैव, मा समीपागमः।

**मर्त्य.** – वयमपि भौमा भवत्सहोदरा एव, मा भैषीः।

**कुजः** – सहोदरत्वं नाम सहजवैरित्वम्। तत्तु प्रमाणीकृतमेव। तत्तिष्ठ दूरे।

**मर्त्य.** – भ्रातः कुज! त्वमसि वक्र इति चिरं प्रसिद्धः।
स्वाभाविकं वक्रत्वं गोपयितुं रखेटयन्त्रोपरि कलङ्कमारोपयसि।[23]

एवमेव मर्त्यमणिविश्वकर्मामध्ययोः संवादेन हास्यमुद्भवति-

**मर्त्यमणिः** - अहो ग्रहगणैरहं सहसा गृहीतो ब्रह्मलोकं प्राप्तोऽस्मि। ब्रह्मा चतुर्मुख इति श्रुतं तत्कथयमेकमुखः।

**विश्व.** - भो मूढ! चतुर्वेदचतुर्वर्णचतुराश्रमप्रकाशार्थं स्थितं मुखचतुष्ट्यम्। अधुना त्रीणि मुखान्येव तदङ्गे लीयन्ते।

**ब्रह्मा** - (नयने उन्मील्य जृम्भां प्रदर्शयन्) विश्वकर्मन्।

**विश्व.** - (छोटिकाधानं कुर्वन्) आज्ञापयतु देवः।।[29]

आधुनिकयुगे वैज्ञानिकोन्नतिः तीव्रतया भवन्ती अस्ति। विज्ञानेन अद्य मानवाय प्रत्येकं कार्यं सुलभं कृतम्। मानवस्योन्नत्या सह विज्ञानं विनाशकमपि सिद्धम्। विज्ञानबलेन विध्वंसकाणविकायुधानां यन्त्राणां निर्माणं परीक्षणं च क्रियते येषां मानवजातेः उपरि दुष्प्रभावः विद्यते। शक्तिशाली-अस्त्रैः परस्परं विनाशयति। प्रहसनकारेण अस्मिन् विषये गम्भीरं चिन्तनं प्रस्तुतम्। जीवन्यायतीर्थेन अनेन प्रहसनेन अयमेव सन्दिष्टः यत् मानवेन विज्ञानस्य समुचितोपयोगो जनककल्याणाय करणीयः, वैज्ञानिकाविष्काराणामुपयोगः मानवस्य सुखाय उत्थानाय च कुर्यात् येन अनन्तकालपर्यन्तं सर्वे जनाः सुखशान्तिपूर्वकं जीवेयुः। अस्य प्रहसनस्यान्ते भरतवाक्ये विश्वकल्याणस्य सद्भावना निहिता-

भरतवाक्यम्-

**विज्ञानमज्ञानमुदस्य विश्वविद्यालये विश्वहिताय भूयात्।**
**शतानि वर्षाणि च हर्षधाम शान्तिस्थलं भूतलमस्तु कामम्।।**[30]

## सन्दर्भ-ग्रन्थसूची

1. दशरूपकम् - 1/7
2. साहित्यदर्पणम् - 6/3
3. संस्कृतसाहित्यपरिषत् पत्रिका - 89/1-4, पृष्ठ- 124
4. एकांकि-संस्कृतनवरत्नसुषमा - पृष्ठ 73-74
5. साहित्यदर्पणम् - 6/264-266
6. दशरूपकम् - 3/54
7. दशरूपकम् - 3/57/54
8. दशरूपकम् - 3/55/2

9. बीसवीं शताब्दी के संस्कृत प्रहसनों का अध्ययन- (डॉ. नरेन्द्रनाथ यादव) पृ. 11 'अत्र निर्वचनं- यतः परिहासप्रधानान्या-भाषणान्यत्रप्रहस्यमाने हास्यप्रधानः वचनसम्बन्ध-शीलादीनां बाहुल्येन भवन्ति तेन इदं प्रहसनम्'' - अभिनवगुप्तः
10. साहित्यदर्पणम् - विश्वनाथः - 6/64-25
11. संस्कृतसाहित्यपरिषत्पत्रिका - 89/1-4 पृ. 66
12. साहित्यदर्पणम् - 6/38
13. संस्कृतसाहित्यपरिषत्पत्रिका 89/1-4 पृ. 67
14. तत्रैव पृ. - 68
15. तत्रैव पृ. - 69
16. तत्रैव पृ. - 69
17. तत्रैव पृ. - 74
18. तत्रैव पृ. - 69
19. तत्रैव पृ. - 71
20. तत्रैव पृ. - 71
21. तत्रैव पृ. - 72
22. तत्रैव पृ. -72
23. तत्रैव पृ. - 74
24. तत्रैव पृ. -74
25. तत्रैव पृ. - 74
26. तत्रैव पृ. - 74
27. अङ्गी हास्यरसस्तत्र-साहित्यदर्पणम् - 6/265
28. संस्कृतसाहित्यपरिषत्पत्रिका, पृ. - 70
29. तत्रैव पृ. -73
30. तत्रैव पृ. - 75

सहायक आचार्यः, संस्कृत-विभागः,
रामेश्वरी देवी राजकीय-कन्यामहाविद्यालयः,
भरतपुरम्



वर्ष : 47 अङ्क : 2
अप्रेल-जून, 2022 स्वरमङ्गला
ISSN-2249-9296

# वेदस्याध्ययने निरुक्तस्य महत्ता

- **डॉ. उषाकिरणयादवः**

वेदा अखिलामनवजातेः ज्ञानविज्ञानयोः सनातनग्रन्थाः सन्ति। वेदानां समग्रविकासे वेदाङ्गानां विशिष्टा महत्ता विद्यते। शिक्षा कल्पो व्याकरणं छन्दोविचितिः ज्योतिषमिति षड् वेदाङ्गानि सन्ति। सर्वेषामेव विशिष्टा महत्ताऽस्ति। शोधलेखेऽस्मिन्निरुक्तस्य भूमिकाया उपयोगितायाः वा विवेचनं क्रियते। अद्य केवलं यास्काचार्यप्रणीतन्निरुक्तमुपलभ्यते। वर्णनमिदमेतदेवाधारितमस्ति।

निरुक्तस्य महत्त्वमस्य विषयवस्तुप्रयोजनप्रस्तुतीकरणादिभिर्ज्ञातुं शक्यते। एषां क्रमिकं वर्णनमित्थमस्ति-

**विषयवस्तु**- निरुक्तस्य प्रतिपाद्यो निघण्टुनामको वैदिकशब्दकोशोऽस्ति, यः 'समाम्नायः' अपि कथ्यतेऽस्य निर्देश यास्काचार्येण इत्थङ्कृतम्- 'समाम्नायः समाम्नातः स व्याख्यातव्यः'[1]

**निघण्टोः संक्षिप्तपरिचयः** -

अस्मिन् शब्दकोशे त्रीणि काण्डानि पंचाध्यायाश्च सन्ति। त्र्यध्याययुक्ते प्रथमे काण्डे एकार्थस्य अभिधायकाः अनेके शब्दाः संकलिताः सन्ति। यथा पृथिवीशब्दस्य वाचका एकविंशतिशब्दाः संचिताः कृताः।

द्वितीयकाण्डेऽनेकार्थवाचकानामेकशब्दानां संचयो विद्यते।

तृतीयकाण्डे मुख्यतः प्रधानदेवतानां नामानि संकलितानि सन्ति। अस्य कथनन्निरुक्तेऽग्रलिखितरूपेण कृतम्-

1. ''एतावन्तः समानकर्माणो धातवः। धातुर्दधातेः। एतावन्त्यस्य सत्त्वस्य नामधेयानि।[2]
2. एतावतामर्थानामिदमभिधानम्।
3. नैघण्टुकमिदं देवतानामप्राधान्येन इति। तद् यदन्यदेवते मन्त्रे निपतति नैघण्टुकं तत्। तद्यानि नामानि प्राधान्यस्तुतीनां देवतानां तत् दैवतमित्याचक्षते। तदुपरिष्टात् व्याख्यास्यामः। नैघण्टुकानि नैगमानि इह।''[2]

निघण्टोः त्रीणि काण्डानि नैघण्टुक- नैगम-दैवतानि सन्ति। काण्डानां विस्तारः पञ्चाध्यायेषु कृतः ये निर्वचनकरणे निरुक्ते द्वादश संजाताः। आचार्येण प्रधानप्रतिपाद्ये प्रसंगवशागतानां शब्दानामपि निर्वचनं कृतम्। उदाहरणे मन्त्रा मन्त्रांशाश्च उद्धृतास्सन्ति, अतः विस्तारः स्वाभाविक एवास्ति।

**निरुक्तस्य प्रयोजनम्**-आचार्येण निरुक्तस्य पंच प्रयोजनानि प्रतिपादितानि निर्वचनं, मन्त्रार्थज्ञानं, पदविभागज्ञानं, देवतापरिज्ञानं प्रशंसाप्राप्तिश्च।[3] एषु प्रयोजनेषु मुख्यप्रयोजनमस्ति-वैदिकशब्दकोशस्य शब्दानां निर्वचनमस्य कथनं प्रथमेऽध्याये एव कृतं-समाम्नायः समाम्नातः स व्याख्यातव्यः। अनेनैव प्रयोजनेन ग्रन्थस्य नाम

करणं कृतम्– 'निरुक्तम्', प्राधान्येन व्यपदेशा भवन्ति इति नियमत:। पंचप्रयोजनानाङ्क्रमिकवर्णने सर्वप्रथममस्ति **निर्वचनम्**– यद्यपि– समाम्नायस्य शब्दानां निर्वचनम्मुख्यत: द्वितीयाध्यायस्य द्वितीयपादाद् भवति किन्तु समाम्नायस्य नाम 'निघण्टु:' किमर्थमिति जिज्ञासाया: समाधानार्थं प्रथमेऽध्याये निघण्टुशब्दस्य तिस्रो निरुक्तय: कृता: सर्वप्रथममधोलिखितरूपे–

1. ''निगमा इमे भवन्ति। छन्दोभ्य: समाहृत्य समाहृत्य समाम्नाता:। ते इमे निगन्तव एव सन्तो निगमनान्निघण्टव उच्यन्ते इत्यौपमन्यव:।

2. अपि वा आहननादेव स्यु: समाहता भवन्ति।

3. यद्वा समाहृता भवन्ति।''[4]

प्रथमनिर्वचनेन स्पष्टीभवति यद् शब्दकोशोऽयं निश्चयेनार्थबोधकोऽस्ति वैदिकशब्दानां यत इमे शब्दा वेदेभ्य एव संकलितास्सन्ति।

द्वितीयनिर्वचनेन ज्ञायते यदस्मिन् शब्दकोशे शब्दानां संकलनं व्यवस्थितरूपे कृतमतो निघण्टु: कथ्यतेऽयम्।

तृतीयनिर्वचनेन स्पष्टीभवतीदं यदत्र वेदानां सर्वे शब्दा: न विद्यन्तेऽपितु विशिष्टा: दुर्बोधा एव संचिता: सन्ति।

निर्वचनक्रमे एकं प्रमुखोदाहरणमस्ति गोशब्दस्य निर्वचनं यन्निघण्टोरनेकशब्दानामेकार्थस्य निर्वचनक्रमे पृथिवीवाचकैकविंशतिपदेष्वेकमस्ति–

''अथातोऽनुक्रमिष्याम:। गौरिति पृथिव्या नामधेयम्, यद्दूरं गता भवति। यच्चास्यां भूतानि गच्छन्ति। गातेर्वोकारो नामकरण:।[5] गोपदस्यान्येऽप्यर्था अत्र निरूपिता: सन्ति यै: शब्दस्यानेकार्थवाचकताऽपि ज्ञायते किन्तु शब्दोऽयमद्यत्वे प्राय: गोप्राणे: वाचको विद्यते लौकिके व्यवहारे। वेदेषु विभिन्न–प्रकरणेषु गोशब्दस्यार्थज्ञानाय गोशब्दस्य सर्वाणि निर्वचनानि ज्ञातव्यानि। महत्त्वपूर्णानि सन्तीमानि।

**मन्त्रार्थज्ञानं** द्वितीयप्रयोजनमस्ति निरुक्तस्य यतो हि शब्दानान्निर्वचनेन मन्त्राणामर्थप्रतीति: भवति। अर्थज्ञानं विना स्वरसंस्कारयो: निरूपणं समग्रतया न जायते, अत: शब्दशास्त्रमिदं व्याकरणस्य संपूरकमप्यस्ति। प्रसंगेऽस्मिन्नाचार्येण यास्केन कौत्साचार्यस्य मन्त्राणामनर्थकतापरं मतं निरूपितन्तस्य सर्वासां युक्तीनां क्रमश: खण्डनं कृत्वा स्वस्यास्य मतस्य संस्थापनाऽपि कृता यन्मन्त्रा: सार्थका: भवन्ति।[6]

**पदविभागस्य ज्ञानम्**– तृतीयं प्रयोजनमस्तीदन्निरुक्तस्य एक एव पदं नाम भवति क्रियाऽपि च। तयोर्भेद: निरुक्तस्य निर्वचनेनैव ज्ञातुं शक्यते। यथा– 'अवसाय पद्वते रुद्र मृड इति'। अत्र निरुक्तस्य निर्वचनेन ज्ञायते यदत्र अवसायशब्दो नामास्ति शब्दे च चतुर्थीविभक्ति अस्ति, अतएव पदच्छेदो न कृत:। पदोऽयं गोशब्दस्याभिधायक अस्ति।

'अवसाय अश्वान्' अत्र अवसायपद: धातु अस्ति, अत: प्रकृतिप्रत्ययोर्विभाजनं कर्तुं शक्यतेऽत्र। अत्रेदमपि स्पष्टीकृतं यद् ये शब्दा: विभिन्न–विभक्तिषु समाना: भवन्ति तेषां विभक्तेर्ज्ञानमपि निरुक्तस्यार्थज्ञानमूलकनिर्वचनेन जायते। यथा– 'दूतो निर्ऋत्या इदमाजगाम' इत्यत्र निरुक्तेन ज्ञायते यदत्र पञ्चमी षष्ठी वा विभक्ति अस्ति। एवमेव 'परो निर्ऋत्या आचक्षस्व' अत्र निर्ऋत्या इति शब्द ऐकारान्तो चतुर्थीवाचकोऽस्ति[7], इत्यपि निरुक्तेन ज्ञायते। अत: पदानां विभागस्य ज्ञानार्थमपि महत्त्वं विद्यते निरुक्तस्य।

**देवताज्ञानम्**– इदन्निरुक्तस्य चतुर्थप्रयोजनमस्ति। यज्ञकर्म वेदेषु प्रमुखकर्म कथितम्। यज्ञकर्मणि देवताकथनेन बहवो विधय: भवन्ति। देवानां ज्ञानन्निरुक्तेन भवति। आचार्येणात्र स्पष्टीकृतमिदं यद् यदि कोऽपि याज्ञिको कथयेत् स: शब्दशक्त्यैव देवताया: निर्णयं कर्तुं शक्नोति तर्हि सत्यं नास्तीदम्मतं तस्य, यतो हि मन्त्रेऽनेकदेवानां स्तुति अपि क्रियते तत्र देवेषु तेषु प्रधानगौणयोर्निश्चयो निरुक्तेनैव कर्तुं शक्यते। कुत्रचिच्च वर्णितदेवेषु कोऽपि प्रमुखो न भवत्यन्य एव, तस्य प्रमुखताया: ज्ञानमपि निरुक्तेनैव जायते।

यथा– 'इन्द्रं न त्वा शवसा देवता वायुं पृणन्ति' इति वायुलिङ्गं च इन्द्रलिङ्गं चाग्नेये मन्त्रे। 'अग्निरिव मन्यो त्विषित: सहस्व' इति तथाग्निर्मान्यवे मन्त्रे।[8] अत्र प्रथमे मन्त्रे न तु इन्द्रो न च वायु: प्रमुखो विद्यतेऽपि तु अग्नि: प्रधानोऽस्ति। द्वितीयमन्त्रे च मन्यु: प्रमुखो विद्यतेऽत: देवताज्ञानार्थन्निरुक्तस्य महत्ताऽसन्दिधाऽस्ति।

**प्रशंसाप्राप्ति**:– पंचमप्रयोजनमस्त्येतन्निरुक्तस्य। ज्ञानेन प्रशंसाऽज्ञानेन च निन्दा भवतीति मतमस्त्याचार्ययास्कस्य। ज्ञानस्यार्जनन्निरुक्तेन भवत्यत: शास्त्रमिदं प्रशंसा–प्राप्ते: कारणमस्ति। अज्ञानेन निन्दा ज्ञानेन च प्रशंसा कथं प्राप्यते, इदमपि सोदाहरणं स्पष्टीकृतन्निरुक्ते। द्वयो: वर्णनं क्रमश इत्थमस्ति– **अज्ञानिन: निन्दा**– आचार्यस्य मतानुसारं वेदान् पठित्वाऽपि यो मनुष्योऽर्थं न जानाति स: भारवाही स्थाणु इव भवति। स: वेदस्य किमपि फलन्तथैव प्राप्तुमसमर्थो भवति यथा वह्नेरभावे शुष्कोऽपि इन्धः प्रज्ज्वलितुमसमर्थो भवति। तस्य कृते वेद: मायावी धेनु इव निष्फलो जायते। अर्थज्ञानस्याभावे तेन वेदस्य यज्ञदेवताऽध्यात्मयुतं किमपि फलं प्राप्तुं न शक्नोति। **ज्ञानप्रशंसा** निरुक्ते कथितं यद् यो जनो वेदार्थज्ञाता भवति, स सर्वं कल्याणं प्राप्नोति। स: ज्ञानेन पापरहितो भवितुं शक्नोति। तेन पापानां विनाशं कर्तुं शक्यते। तस्यार्थज्ञस्य कृते वेदवाक् स्वस्य समग्रं स्वरूपं तथैवानावृतं करोति यथा अभीष्टा सुसज्जिता पत्नी स्वस्य पत्यु: समक्षं स्वकीयं सर्वस्वं समर्पयति। तं वेदार्थवेत्तारं गूढ़ार्थविषयेषु कोऽपि पराजितुं न शक्नोति।

तस्य वाचा सह मैत्री संजायते। स्वस्य मतस्य पुष्टये आचार्येण ग्रन्थे इमौ द्वौ मन्त्रौ समुद्धृतौ कृतौ–

**उत त्व: पश्यन् न ददर्श वाचमुत त्व: शृण्वन् न शृणोत्येनाम्।**
**उतो त्वस्मै तन्वं विसस्रे जायेव पत्य उशती सुवासा:।।**
**उत त्वं सख्ये स्थिरपीतमाहु: नैनं हिन्वन्त्यपि वाजिनेषु।**
**अधेन्वा चरति माययैष वाचं सुश्रुवाँ अफलामपुष्पाम्।।**[9]

पंचप्रयोजनैरेभि: निरुक्तस्य महत्त्वं सुस्पष्टं भवति सम्यक्तया। विषयवस्तु प्रयोजनाभ्यां सह निरुक्तस्य प्रस्तुतिकरणशैल्यपि कारणमस्त्यस्य महत्ताया अत: विवेच्यतेऽद: –

**प्रस्तुतिकरणम्**– निरुक्ते निर्वचनस्य शैली अतिवैज्ञानिकी सुगमा चास्ति। निर्वचनं मुख्यत: द्वितीयाध्यायस्य द्वितीयपादात् प्रारब्धम् 'अथातोऽनुक्रमिष्याम:' इति वचनेन, किन्तु तस्मात्पूर्वं निर्वचनप्रस्तुतिकरणस्य सिद्धान्तस्य सविस्तरं वर्णनङ्कृतं यन्निर्वचनकर्तु: पाठकस्य च कृतेऽतिमहत्त्वपूर्णमस्ति, यतो हि शास्त्रेऽस्मिन् बहव: शब्दा ईदृशा: सन्ति येषां नाम्नि अर्थे च संगति: न दृश्यते किन्तु निर्वचनसिद्धान्तस्य ज्ञानेन विसंगतेर्निराकरणं भवति।

सिद्धान्तस्य संक्षिप्तं वर्णनमधोलिखितरूपेऽस्ति – आचार्येण निरुक्ते निर्वचनस्य मौलिका: षट् सिद्धान्ता कथिता:–

1. येषु पदेषु उदात्तादिस्वराणां, प्रकृतिप्रत्यययोर्भेदः संयोगश्च स्पष्टतया दृश्यते, तत्र व्याकरणस्य प्रक्रियानुरूपं निर्वचनं कर्तव्यम्।
2. येषु पदेषु व्याकरणस्य प्रक्रिया स्पष्टा न भवति तत्र अर्थाधारितं निर्वचनं करणीयम्।
3. व्याकरणवृत्तेः पूर्णतो ज्ञाते सति स्वरव्यञ्जनसादृश्येण निर्वचनङ्कर्त्तव्यम्।
4. निर्वचनमपरिहार्यमस्ति यतो हि सर्वे नामपदाः आख्यतजाः भवन्ति अतस्तेषान्निर्वचनमवश्यं करणीयमिति मतमस्ति यास्काचार्यस्य।
5. निर्वचने व्याकरणवृत्तेश्चिन्ता न कर्त्तव्या, यतो हि वृत्तय अनेकत्र संशययुक्ता भवन्ति। मतस्यास्य पुष्टये संशययुतानां पंचदशवृत्तीनां सोदाहरणं वर्णनं कृतम्।
6. निर्वचनेऽर्थानुरूपं परिवर्तनमपि कर्तुं शक्यते। अत्रेदमप्युक्तं यदनेकपर्वयुक्तानां तद्धितसमासयुक्तानां पदानान्निर्वचनमपि कर्त्तव्यम्। तत्कृते चाचार्येण क्रमस्य निर्देशोऽपि कृतः।[11]

दुर्गारख्येन टीकाकारेण निर्वचनस्य प्रक्रिया 'पंचविधं निरुक्तम्' इति नाम्ना कथिता। पद्येऽस्मिन्-

**वर्णागमो वर्णविपर्यश्च द्वौ चापरौ वर्णविकारनाशौ।**

**धातोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तम्।।**[12]

**निर्वचनानां कानिचिदुदाहरणानि**- निरुक्तस्य महत्तायाः पुष्टये कानिचिदुदाहरणान्यपि प्रासंगिकानि सन्त्यतः प्रस्तुतिक्रियन्ते-

(क) गौः - गौरिति पृथिव्या नामधेयम्, यद्दूरं गता भवति। यच्चास्यां भूतानि गच्छन्ति। गातेर्वौकारो नामकरणः।[13]

(ख) दमूना- दमूना दममना वा दानमना वापि वा दम इति गृहनाम। तन्मनाः स्यान्मनो मनोतेः।[14] एतयोर्द्वयोर्दृष्टान्तयोः प्रथमः एकार्थवाचकानेकशब्देषूद्धृतः, यस्मिन् व्याकरणवृत्तिरस्पष्टाऽस्ति। द्वितीयदृष्टान्तोऽनेकार्थवाच-कैकपदेभ्य-श्चयनितः, यत्र व्याकरणवृत्तिः प्रत्यक्षा न विद्यते।

(ग) दयते पदोऽयमनेकार्थकधातुनिष्पन्नस्य एतादृशस्य शब्दस्य दृष्टान्तोऽस्ति य अनवगतसंस्कारयुक्तो नास्ति, अतः ग्रन्थकारेण अस्य केवलं नानार्थयुतान्युदाहरणान्येव प्रस्तुतीकृतानि यथा- ''दयतिरनेककर्मा। नवेन पूर्वं दयमानाः स्याम (मै. सं. 4-13-7) इत्युपपदकर्मा।

य एक इद्विदयते वसु (ऋ. 1-84-7) इति दानकर्मा वा विभागकर्मा वा।

दुर्वतोभीमो वा। दुर्वतोसुमो दयते वनानि।। (ऋ. 6-6-5) इति दहतिकर्मा। दुर्वर्तुर्दुर्वारः।

विदद्वसुर्दयमानो वि शत्रून् (ऋ. 3-34-1) इति हिंसाकर्मा।

इमे सुता इन्दवः प्रातरित्वना सजोषसा पिबतमश्विना तान्। अयं हि वामूतये वन्दनाय मां वायसो दोषा दयमानो अबूबुधत्।। दयमान इति।[15]

अत्र 'नैकपदानि निर्ब्रूयात्' इति[16] नियमेन प्रकरणानुरूपमर्थज्ञानेन निर्वचनङ्कृतमतोऽनेकार्थकदयधातोर्विविधा अर्थाः कृता उदाहरणेषु। एवमेवैकार्थस्य वाचकानामनेकपदानां प्रयोगेऽपि प्रकरणानुसारमर्थो ग्रहणीयो यथा विस्तृतार्थस्य प्रकरणे भूमेर्वाचकानामेकविंशतिपदानां पृथ्वी इत्यस्य ग्रहणमेवोचितमस्ति।[17]

समानार्थकपदानामर्थग्रहणे संशये सत्यपि नियमेनानेनैव प्रकरणानुरूपमर्थः करणीयः यथा- निर्ऋतिरिति पदं पृथिवीसन्दर्भे नितान्तरमणीयार्थस्य वाचकं भवत्यन्यत्र च कष्टस्य प्राप्तिरित्यर्थोऽप्यस्ति। तत्र प्रकरणानुरूपमस्य शब्दस्य निष्पत्ति ऋच्छधातोर्भवति।[18]

उपर्युक्तवर्णनेन स्पष्टीभवति यत् प्रयोजन-प्रतिपाद्यप्रस्तुतिकरणदृष्ट्या निरुक्तस्य महती भूमिका विद्यते वेदार्थस्य ग्रहणे। निरुक्तस्योपयोगितायाः कानिचिदन्यकारणान्यपि ज्ञायन्ते शास्त्रस्यास्याध्यनेन तेषां वर्णनमित्थमस्ति-

1. शास्त्रेण ज्ञायते तथ्यमिदं यत् कस्यापि पदार्थस्य पर्याया अनेका भवितुं शक्यन्ते। तेषां प्रयोगः प्रकरणानुरूपं कर्त्तव्यः। समग्ररूपे च पदार्थस्य स्वरूपं सर्वैरेव पर्यायैस्सह ज्ञातव्यं, यथा- पृथिव्या एकविंशतिनामानि सर्वाणि मिलित्वैव अस्याः समग्रस्वरूपं प्रकटयन्ति।

2. निरुक्तस्य भूमिकास्वरूपे प्रथमाध्यायेऽन्यत्र च मुख्यशब्दानां निर्वचनेन सहानेकेषामितरशब्दानां व्याख्याऽपि कृता आचार्येण याऽतिमहत्त्वपूर्णाऽस्ति। यथा- 'चित्' निपातस्य वर्णनप्रसंगोदाहारणे प्रयुक्तस्य आचार्यशब्दस्य तिस्रः निरुक्तयः कृता इमा- 'आचार्यः कस्मात्? आचारं ग्राहयति। आचिनोत्यर्थान् आचिनोति बुद्धिमिति वा।[18] वैदिकमन्त्राणामर्थग्रहणे एषामप्यतिमहत्ता विद्यते।

लौकिकसंस्कृतप्रयुक्तौ कर्मधर्मशब्दौ निरुक्ते अर्थवाचकौ स्त इत्यप्यध्ययनेन ज्ञायते। यथा- पुरुषविद्याऽनित्यत्वात् कर्मसम्पत्तिर्मन्त्रो वेदे।[20] नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति।[21] साक्षात्कृतधर्माण ऋषयो बभूवुः।[22] शास्त्रेऽस्मिन् पदानां विभाजनं तेषां सोदाहरणं वर्णनमपि उपलभ्यते ज्ञानार्थम्।

उद्धृतमतैरनेकेषान्नैरुक्तानां नामानि ज्ञायन्ते येषां ग्रन्था अधुना नोपलभ्यन्ते।[23] निरुक्तशास्त्रस्य इतिहासज्ञानाय नामान्येतान्यतिमहत्त्वपूर्णानि सन्ति। शास्त्रेण ज्ञायते यद् देवलोके देवा अपि व्यवहारस्य सूक्ष्मविधिना-'शब्देन' व्यवहरन्ति। अत्रैव शब्दस्य नित्यताऽपि प्रकटिता।[24] शास्त्रे आदित्य स्वर्गनरकदेवपुरुषादीनां वैज्ञानिकी व्याख्या कृता[25] ययाऽस्माकं विश्वासोऽर्थमूलको भवितुं शक्यते जीवनञ्च सुखमयम्। एका प्रमुखा विशेषताऽस्ति निरुक्तस्य- 'उदाहरणानि' यानि मन्त्रांशरूपे मन्त्ररूपे चोभयरूपे प्रकटितानि। एतैरुदाहरणैर्निवचनानि- सुगमानि भवन्ति वैदिकमन्त्राणां ज्ञानमपि भवति च। यथा- 'उतो त्वस्मै तन्वं विसस्रे' (ऋ. 10/7/14) इति चतुर्थ्याम्।[26] (दृष्टान्तमिदं मन्त्रांशरूपमस्ति), समग्रमन्त्ररूपोदाहरणस्य दृष्टान्तोऽस्ति मन्त्रोऽयम्- 'अक्षण्वन्तः कर्णवन्तः सखायो मनोजवेष्वसमाः बभूवुः। आदध्नास उपकक्षास उ त्वे ह्रदा इव स्नात्वा उत्वे ददृक्षे।।' (ऋ. 10-71-7)[27]

**निष्कर्षः**- निष्कर्षोऽयमस्ति यन्निरुक्ताख्यो वेदाङ्गोऽतिमहत्त्वपूर्णोऽस्ति। ग्रन्थेनानेन वैदिकशब्दानां मन्त्राणाञ्च यथार्थज्ञानस्य प्राप्तिस्तस्य संस्थापना चाधुनिकयुगस्य महत्यावश्यकताऽस्ति। शास्त्रमिदं व्याकरणस्य संपूरकमप्यस्त्यतोऽस्यार्थप्रधानमौलिकप्रक्रियया सह व्याकरणस्य ज्ञानमप्यावश्यकं भवति यस्य कथनन्निरुक्ते एव कृतमित्थम्- 'नावैयाकरणाय नानुपसन्नाय अनिदंविदे वा।'[28]

**सन्दर्भाः-**


1. यास्काचार्यप्रणीते निरुक्ते, 1/1/1 पृष्ठांकः 1
   व्याख्याकारो विश्वेश्वराचार्यः प्रकाशकः- ज्ञानमण्डललिमिटेडः, वाराणसी, 1966
2. तत्रैव, 1/6/21, पृ. - 126, 129
3. तत्रैव, 1/1/1-19, पृ. 05-122
4. तत्रैव, 1/1/1, पृ. 05-07
5. तत्रैव, 2/2/5, पृ. 153

6. तत्रैव, 1/5/14, पृ. 96-109
7. तत्रैव, 1/6/16, पृ. 111-114
8. तत्रैव, 1/6/16, पृ. 115-116
9. तत्रैव, 1/6/17-19, पृ. 117-122
10. तत्रैव, पृ. 119, 121
11. तत्रैव, पृ. 132
13. तत्रैव, 2/2/5 पृ. 153
14. तत्रैव 4/1/5, पृ. 378
15. तत्रैव 4/3/17, पृ. 416-419
16. तत्रैव 2/1/3 पृ. 150
17. ''प्रथनात् पृथिवी'' इत्याहुः क एनामप्रथयिष्यत् किमाधाराश्चेति। अथ वै दर्शनेन पृथुः अप्रथिता चेदप्यन्यैः। तत्रैव, 1/4/13, पृ. 93
18. इतीमान्येकविंशतिः पृथिवीनामधेयान्युत्क्रान्तानि। तत्र निर्ऋतिः निरमणात्। ऋच्छतेः कृच्छापत्तिरितरा। सा पृथिव्या सन्दिह्यते। तयोर्विभागः। तत्रैव, 2/2/7, पृ. 165
19. तत्रैव, 1/2/4, पृ. 44
20. तत्रैव, 1/1/2, पृ. 34
21. तत्रैव, 1/1/3 पृ. 35
22. तत्रैव, 1/6/20, पृ. 122
23. आचार्य विश्वेश्वरस्य मतानुसारमेषामष्टादशनैरुक्तानां नामत उल्लेखः कृतः निरुक्ते- आग्रायण, औदुम्बरायणः और्णवाभः, काथक्यः, क्रौष्टुकिः, गार्ग्यः गालवः, चर्मशिराः, तैटांकिः, शतवलाक्षः, शाकपूणिः, स्थौलाष्ठीविः, औपमन्यवः शाकटायनः, शाकल्यः, कौत्सः वार्ष्यायणिश्च। तत्रैव, पृ. 15
24. व्याप्तिमत्त्वात्तु शब्दस्य। अणीयस्त्वाच्च शब्देन संज्ञाकरणं व्यवहारार्थं लोके। तेषां मनुष्यवद् देवताभिधानम्। तत्रैव 1/1/2 पृ. 31-33

25. (क) 'स्वः' आदित्यो भवति, सु अरणः, सु ईरणः। स्वृतो रसान्, स्वृतो भासं ज्योतिषाम्, स्वृतो भासा इति वा। एतेन द्यौर्व्याख्याता। तत्रैव, 2/4/14, पृ. 197

स्व इव 'नाकः' अपि आदित्यस्य द्युलोकस्य च नामास्ति, द्वयोर्निर्वचने कृते ग्रन्थे- 'नाकः' आदित्यो भवति। नेता रसानाम्, नेता भासाम्, ज्योतिषां प्रणयः।

अथ द्यौः। कमिति सुखनाम, तत्प्रतिषिद्धं प्रतिषिद्ध्यते। 'न वा अमुं लोकं जग्मुषे किञ्च नाकम्' न वा अमुं लोकं गतवते किञ्च नाकम्' न वा अमुं लोकं गतवते किञ्च नासुखम्। पुण्यकृतो ह्येव तत्र गच्छन्ति। तत्रैव, 2/4/14 पृ. 198-99

25. (ख) नरकं न्यरकं नीचैर्गमनम्। नास्मिन् रमणस्थानं अल्पमप्यस्तीति वा। तत्रैव, 1/3/13 पृ. 79

25. (ग) देवो दानाद्वा। दीपनाद्वा। द्योतनाद्वा। द्युस्थाने भवतीति वा। यो देवः सा देवता। तत्रैव, 3/7/15, पण्डितभगवद्दत्तभाष्ययुते निरुक्ते, 2004, रामलालकपूरट्रस्टेन प्रकाशितः सोनीपतनगरे।

25. (घ) पुरुषः पुरिषादः पुरिशयः। पूरयतेर्वा, पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य। विश्वेशराचार्यस्य व्याख्यायुक्ते निरुक्ते 2/1/3, पृ. 148

26. तत्रैव, 1/3/10, पृ. 70
27. तत्रैव, 1/3/10, पृ. 71
78. तत्रैव, 2/1/4, पृ. 150

सह आचार्या, संस्कृतविभागे,
सेमुगा. राजकाये स्नातकोत्तरे कन्यामहाविद्यालये,
भीलवाड़ानगरम्- 311001 (राजस्थानम्)



वर्ष : 47 अङ्क : 2 स्वरमङ्गला
अप्रेल-जून, 2022 ISSN-2249-9296

# श्रीमद्भगवद्गीताया गीताभूषणभाष्यानुसारं योगिनः स्वरूपम्

**डॉ. अञ्जना शर्मा**

भारतीयदर्शनसाहित्ये श्रुतिस्मृतिन्यायाख्यानि सन्ति त्रीणि प्रस्थानानि। भारतीयविचारशास्त्रस्य श्रेष्ठोपजीव्यग्रन्थत्वादुपनिषदः प्रस्थानत्रय्यां प्रथमस्थानत्वेन गृह्यन्ते। श्रीमद्भगवद्गीता द्वितीयं प्रस्थानमिति। गीताया द्वितीयप्रस्थानत्वं तस्यामेव प्रकटितं, यथाहि-

**सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।**
**पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्।।**

स्मार्तप्रस्थानं श्रीमद्भगवद्गीता।[1] अस्याः सुदीर्घा महती टीकापरम्परा। परम्परायामस्यां गीताभूषणभाष्यस्य रचनाकार अचिन्त्याभेदाभेदवादी **आचार्यबलदेवविद्याभूषणः।** सुप्रसिद्धदार्शनिकोऽयं सप्तदशाधिकान् ग्रन्थान् विरचितवान्। ब्रह्मसूत्रोपरि गोविन्दभाष्यं तथा च श्रीमद्भगवद्गीतामाश्रित्य गीताभूषणभाष्यं विरच्य दार्शनिकजगति महद्योगदानं प्राददत्। गीताभूषणभाष्यं पदपदार्थमीमांसापूर्वकं गूढार्थं प्रकट्य अर्थावबोधने साहाय्यमत्यन्तं ददाति। यथाहि श्रीमद्भगवद्गीतायाः षष्ठस्य अध्यायस्य विषयवस्तु कथयति भाष्यकारः-

**षष्ठे योगविधिः कर्मशुद्धस्य विजितात्मनः।**
**स्थैर्योपायश्च मनसोऽस्थिरस्यापीति कीर्त्यते।।**

षष्ठस्य प्रारम्भे पद्यद्वयेन भगवता संन्यासिनो योगिनश्च स्वरूपमुक्तम्-

**अनाश्रितः कर्मफलं कार्यं कर्म करोति यः।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः।।**
**यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव।**
**न ह्यसंन्यस्तसंकल्पने योगी भवति कश्चन।।**[2]

1. श्रीमद्भगवद्गीता, गीताभूषणभाष्यं, 6/1, पृ. 165
2. श्रीमद्भगवद्गीता, 6/1,2

अत्र भाष्यकार: स्पष्टयति यत् 'कर्मफलं पश्वन्नपुत्रस्वर्गादिकामनाश्रितोऽनिच्छन् कार्यमवश्यकर्त्तव्यतया विहितं कर्म यः करोति, स सन्न्यासी ज्ञानयोगनिष्ठः योगी चाष्टाङ्गयोगनिष्ठः स एव, कर्मयोगेनैव तयोः सिद्धिरिति भावः। न निरग्निरग्निहोत्रादिकर्मत्यागी यतिवेशः सन्न्यासी न चाक्रियः शारीरकर्मत्यागी अर्द्धमुद्रितनेत्रो योगी। अत्र योगमष्टाङ्गं चिकीर्षूणां सहसा कर्म न त्याज्यमिति मतम्।।[3]

भाष्यकारः शंकापुरस्सरं समादधाति, यथाहि – ''ननु सर्वेन्द्रियवृत्तिविरक्तिरूपायां ज्ञाननिष्ठायां सन्न्यास-शब्दश्चित्तवृत्तिनिरोधे योगशब्दश्च पठ्यते। स च सर्वेन्द्रियव्यापारात्मके कर्मयोगे स सन्न्यासी च योगी चेति ब्रुवता भवता कया वृत्त्या नीयत इति चेत्तत्राह– यमिति। यं कर्मयोगमर्थतात्पर्यज्ञाः सन्न्यासं प्राहुस्तमेव, तं योगमष्टाङ्गं विद्धि। हे पाण्डव! ननु ''सिंहो माणवकः' इत्यादौ शौर्य्यादिगुणसादृश्येन तथा प्रयोगः, प्रकृते किं सादृश्यमिति चेत्तत्राह– न इति। असंन्यस्तसङ्कल्पः कश्चन कश्चिदपि ज्ञानयोग्यष्टाङ्गयोगी च न भवत्यपि तु संन्यस्तसङ्कल्प एव भवतीत्यर्थः। संन्यस्तः परित्यक्तः सङ्कल्पः फलेच्छा च येन सः। तथा फलत्यागसादृश्यात्तृष्णारूपिचित्तवृत्तिनिरोधसादृश्याच्च कर्मयोगिनस्तदुभयत्वेन प्रयोगो गौणवृत्त्येति।''[4]

**योगारूढः** – अष्टाङ्गयोगिनः कर्मानुष्ठानं कदा पर्यन्तं भवेत्? अस्या शंकायाः समाधानमस्ति– आरुरुक्षोरिति।[5] योगाभ्यासिनः योगारोहे कर्म कारणं हृद्विशुद्धिकृत्त्वात्। तस्यैव योगारूढस्य ध्याननिष्ठस्य तद्दाढ्र्ये शमो विक्षेपककर्मोपरतिः कारणम्।[6]

**योगारूढत्वज्ञापकं चिह्नम्**– भाष्यकारानुसारं चतुर्थपद्ये योगारूढत्वज्ञापकं चिह्नमुक्तम्। इन्द्रियार्थेषु शब्दादिषु तत्साधनेषु कर्मसु च यदात्मानन्दरसिकः सन्न सज्जते। तत्र हेतुः– सर्वसंकल्पसन्न्यासी।[7] अस्य पदस्य व्याख्यां करोति यत् सर्वान् भोगविषयान् कर्मविषयांश्च सङ्कल्पानासक्तिमूलभूतान् सन्न्यसितुं परित्यक्तुं शीलं यस्य सः।[8] इन्द्रियार्थाद्यनासक्तौ हेतुभावेनाह– उद्धरेदिति।[9] ''विषयाद्यासक्तमनस्कतया संसारकूपे निमग्नमात्मानं जीवमात्मना विषयासक्तिरहितेन मनसा तस्मादुद्धरेत् ऊद्ध्र्वं हरेत्। विषयासक्तेन मनसात्मानं अवसादयेत्तत्र न निमज्जयेत्। हि निश्चयेनैवमात्मैव मन एवात्मनः स्वस्य बन्धुस्तदेव रिपुः।[10] अत्र स्मृत्याः प्रमाणं प्रस्तौति –

**'मन एव मनुष्याणां कारणं बन्धमोक्षयोः।**
**बन्धाय विषयासङ्गो मुक्त्यै निर्विषयं मनः।।'[11]**

---

3. श्रीमद्भगवद्गीता, गीताभूषणभाष्यं, 6/1
4. तत्रैव 6/2
5. आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते। योगारूढस्य तस्यैव शमः कारणमुच्यते।। श्रीमद्भगवद्गीता 6/3
6. गीताभूषणभाष्ये, 6/3
7. यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते।
   सर्वसंकल्पसन्न्यासी योगारूढस्तदोच्यते।। श्रीमद्भगवद्गीता 6/4
8. गीताभूषणभाष्यं 6/4
9. उद्धरेदात्मनात्मानं नात्मानमवसादयेत्। आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः।।
10. श्रीमद्भगवद्गीता 6/5
11. गीताभूषणभाष्यं 6/5

अत्र कीदृशस्य स बन्धुः, कीदृशस्य च रिपुरित्यपेक्षायामाह- बन्धुरिति।[12] येनात्मना जीवेनात्मा मन एव जितस्तस्य जीवस्य स आत्मा मनो बन्धुस्तद्वदुपकारी। अनात्मनोऽजितमनसस्तु जीवस्यात्मैव मन एव शत्रुवत् शत्रुत्वेऽपकारकत्वे वर्तते।[13]

**योगारम्भयोग्यावस्था**- भाष्यकारानुसारं ''जितेति''[14] त्रिभिः पद्यैः योगारम्भयोग्यावस्था वर्णिता। अत्र 'जितात्मनः' इति पदस्य अर्थः- 'अविकृतमनसः', 'प्रशान्तस्य' इत्यस्य अर्थः- 'रागादिशून्यस्य', ज्ञानं शास्त्रजं विज्ञानं विविक्तात्मानुभवः। कूटस्थ एकस्वभावतया सर्वकालं स्थितः। विजितेन्द्रयः- प्रकृतिविविक्तात्ममात्रनिष्ठत्वात् प्राकृतेषु लोष्ट्रादिषु लोष्ठं मृत्पिण्डः। ईदृशो योगी निष्कामकर्मी युक्त आत्मदर्शनरूपयोगाभ्यासयोग्य उच्यते। सुहृदादिषु समबुद्धिस्तु विशिष्यते।[15]

**योगारूढस्य** - साङ्गं योगं भगवान् उपदिशति-

**योगी युञ्जीत सततमात्मानं रहसि स्थितः।**

**एकाकी यतचित्तात्मा निराशीरपरिग्रहः।।**[16]

अत्र योगी निष्कामकर्मी। अत्मानं मनः सततमह-रहर्युञ्जीत समाधियुक्तं कुर्यात्। रहसि निर्जने निःशब्दे देशे स्थितः तत्राप्येकाकी द्वितीयशून्यस्तत्रापि यतचित्तात्मा यतौ योगप्रतिकूलव्यापारवर्जितो चित्तदेहो यस्य सः, यतो निराशी दृढवैराग्यतयेतरत्र निःस्पृहः अपरिग्रहो निराहारः।[17]

एतदनन्तरमासनशरीरधारणविधिफलनियमान् च उपदिशति।

योगी निष्पन्नयोगः कदा भवेदित्याकांक्षायाः समाधानमाह- यदेति।[18] अत्र भाष्यकारः कथयति योगमभ्यसतो योगिनश्चित्तं यदा विनियतं निरुद्धं सदात्मन्येव स्वस्मिन्नेवावस्थितं स्थिरं भवति, तदात्मेतरसर्वस्पृहाशून्यो युक्तो निष्पन्नयोगः कथ्यते।[19]

**योगिनः स्वरूपम्** - योगी कीदृशो भवतीत्यपेक्षायामाह-

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता।**

**योगिनो यतचत्तिस्य युञ्जतो योगमात्मनः।।**[20]

12. श्रीमद्भगवद्गीता 6/6
13. गीताभूषणभाष्ये 6/6
14. श्रीमद्भगवद्गीता, 6/7, 8, 9
15. गीताभूषणभाष्यं, 6/7, 8, 9
16. श्रीमद्भगवद्गीता, 6/10
17. गीताभूषणभाष्यं, 6/10
18. यदा विनियतं चित्तमात्मन्येवावतिष्ठते।
    निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा।। श्रीमद्भगवद्गीता, 6/18
19. गीताभूषणभाष्यं 6/18
20. श्रीमद्भागवद्गीता, 6/19

अत्र भाष्यकारः स्पष्टयति यद् ''निर्वातदेशस्थो दीपो नेङ्गते न चलति निश्चलः सप्रभस्तिष्ठति स दीपो यथा यथावदुपमा योगज्ञैः स्मृता चिन्तिता। सोपमेत्यत्र- ''सोऽचिलोपे चेत् पादपूरणम्'' इति सूत्रात् सन्धिः। उपमा-शब्देनोपमानं बोध्यम्। कस्येत्याह- योगिन इति। यतचित्तस्य निरुद्धसर्वचित्तवृत्तेरात्मनो योगं ध्यानं युञ्जानोऽनुतिष्ठतः निवृत्तसकलेतरचित्तवृत्तिरभ्युदितज्ञानयोगी निश्चलसप्रभदीपसदृशो भवतीति।[21]

अग्रे भाष्यकारस्य मतं यद् ''नात्यश्नतः''[22] इत्यादौ योग-शब्देनोक्तं समाधिं स्वरूपतः फलतश्च लक्षयति- यत्रेत्यादि-सार्द्धत्रयेण।[23] सुखमिति- यत्र समाधौ यत्तत् प्रसिद्धमात्यन्तिकं नित्यं सुखं वेत्त्यनुभवति। अतीन्द्रियं विषयेन्द्रियसम्बन्धरहितं, बुद्ध्यात्माकारतया ग्राह्यम्। अतएव यत्र स्थितस्तत्त्वत आत्मस्वरूपान्नैव चलति यं योगं लब्ध्वैव ततोऽपरं लाभमधिकं न मन्यते, गुरुणा गुणवत्पुत्रविच्छेदादिना न विचाल्यते तमिति। दुःखसंयोग-वियोगः प्रध्वंसो यत्र तं योगसंज्ञितं समाधिम्।[24]

प्रारम्भदशायां स योगो निश्चयेन प्रयत्ने कृते अनुष्ठेयः। एतादृशं योगमारभमाणस्य कृत्यमुक्तम्-

**संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः।।**
**शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया।**
**आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत्।।**[25]

अत्र संकल्पेत्यस्य तात्पर्यं योगविरोधिनः कामान् विषयानशेषतः सवासनांस्त्यक्त्वा अन्तिमं कृत्यम् 'धृतिगृहीतया' इत्यादिनाह। अत्र धृतिगृहीतया धारणावशीकृतया बुद्ध्या मन आत्मसंस्थं कृत्वा आत्मानं ध्यात्वा समाधावुपरमेत तिष्ठेत्, आत्मनोऽन्यत् किञ्चिदपि न चिन्तयेत्। एतच्च शनैः शनैरभ्यासक्रमेण, न तु हठेन।[26]

यदि कदाचित् प्राक्तनसूक्ष्मदोषान्मनः प्रचलेत् तदा तत् प्रत्याहरणं करणीयम्[27], एवं प्रयतमानस्य पूर्ववदेव समाधिसुखं स्यादित्याह- प्रशान्तेति।[28] अत्र प्रशान्तस्य तात्पर्यम् आत्मन्यचलं मनो यस्य तम्, अकल्मषं इति पदस्य अर्थो दग्धप्राक्तनसूक्ष्मदोषम्, अतएव शान्तरजसम्। 'ब्रह्मभूतं' इत्यस्य तात्पर्यं साक्षात्कृत-विविक्ताविर्भाविताष्ट-गुणकात्मस्वरूपं योगिनं प्रत्युत्तममात्मानुभवरूपं महत् सुखं कर्त्ता स्वयमेवोपैति।[29]

---

21. गीताभूषणभाष्यं 6/19
22. श्रीमद्भगवद्गीता, 6/16
23. गीताभूषणभाष्यम् 6/20-23
24. तत्रैव, 6/21-23
25. श्रीमद्भगवद्गीता 6/24,25
26. गीताभूषणभाष्यं, 6/24, 25
27. तत्रैव, 6/26
28. प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्। उपैति शान्तरजसं ब्रह्मभूतमकल्मषम्। श्रीमद्भगवद्गीता 6/27
29. गीताभूषणभाष्यम् 6/27

भाष्यकारानुसारं स्वात्मसाक्षात्कारानन्तरं परमात्मसाक्षात्कारञ्च लभत इत्याह– युञ्जन्निति।[30] स्वं युञ्जन् योगेनानुभवन् तेनैव विगत-कल्मषो दग्धसर्वदोषो योगी सुखेनानायासेन ब्रह्मसंस्पर्शं परमात्मानुभवमत्यन्तमपरिमितं सुखमश्नुते प्राप्नोति।[31]

**योगयुक्तात्मनः सिद्धसमाधिः**– योगयुक्तात्मा सिद्धसमाधिः सृष्टेषु सर्वेषु जीवेषु समं वैषम्यशून्यं परमात्मानं पश्यति। तथात्वदर्शिनः फलमाह भगवान् यद् एतादृशस्य योगिनोऽहं परमात्मा न प्रणश्यामि नादृश्यो भवामि, स च योगी मे न प्रणश्यति नादृश्यो भवति, आवयोर्मिथः साक्षात्कृतिः सर्वदा भवति।[32]

स योगी ममाचिन्त्यस्वरूपशक्तिमनुभवन्नतिप्रियो भवतीत्याशयेनाह– सर्वेति।[33] भाष्यकारः स्पष्टयति यत् स योगी सर्वथा वर्तमानो व्युत्थानकाले स्वविहितं कर्म कुर्वन्नकुर्वन् वा मयि वर्तते ममाचिन्त्यशक्तिकत्वधर्मानुभवमहिम्ना निर्दग्धकामचारदोषो मत्सामीप्यलक्षणं मोक्षं विन्दति, न तु संसारमिति।[34]

"आत्मौपम्येन."[39] इत्यादिना स्पष्टं यत् स्वस्येव परस्य सुखमेवेच्छति, न तु दुःखं स स्वसुख-दुःखसमदृष्टिः सर्वानुकम्पी योगी मम परमः श्रेष्ठोऽभिमतः, तद्विषमदृष्टिस्तु तत्त्वज्ञोऽप्यपरमयोगीति भावः।[36]

**अर्जुनस्य प्रश्नः**– भगवदुक्तलक्षणक्य साम्यस्य दुष्करत्त्वमालक्ष्य अर्जुनः पृच्छति– योऽयमिति।

**योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन।**
**एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम्।।**
**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम्।**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम्।।**[37]

भाष्यकारोऽनयोः भावं सोदाहरणं कथयति। यथा अर्जुनो वदति– साम्येन स्वपरसुखदुःखतौल्येन योऽयं योगस्त्वया सर्वज्ञेन प्रोक्तस्तस्य स्थिरां सार्वदिशीं स्थितिं निष्ठामप्यहं न पश्यामि, किन्तु द्वित्राण्येव दिनानीत्यर्थः, कुतः ? चञ्चलत्वात्। अयमर्थः– बन्धुषु उदासीनेषु च तत्साम्यं कदाचित् स्यात् न च शत्रुषु निन्दकेषु च कदाचिदपि। यदि परमात्माधिष्ठानत्वं सर्वत्राविशेषमिति विवेकेन तद्ग्राह्यं तर्हि न तत् सार्वदिकम्– अतिचपलस्य बलिष्ठस्य च मनसस्तेन विवेकेन निग्रहीतुमशक्यत्वादिति।[38]

30. युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः। सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते।। श्रीमद्भगवद्गीता 6/28
31. गीताभूषणभाष्यं, 6/28
32. तत्रैव, 6/29, 30
33. सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः। सर्वथा वर्तमानोऽपि स योगी मयि वर्त्तते।। श्रीमद्भगवद्गीता 6/31
34. गीताभूषणभाष्यं 6/31
35. श्रीमद्भगवद्गीता, 6/32
36. गीताभूषणभाष्यं 6/35
37. श्रीमद्भगवद्गीता, 6/33, 34
38. गीताभूषणभाष्यं, 6/33

मनः स्वभावेन चञ्चलम्। अत्र कठोपनिषदो रथरूपकमुद्धृत्य[39] शंकापूर्वकं विषयं स्पष्टयति यत् श्रुतौ बुद्धिनियम्यं मनः श्रूयते ततो विवेकिन्या बुद्ध्या शक्यं तद्वशीकर्तुमिति चेत्तत्राह-प्रमाथीति। तादृशीमपि बुद्धिं प्रमथाति, कुतः ? बलवत् स्वप्रशमकमप्यौषधं यथा बलवान् रोगो न गणयति, तद्वत्। किञ्च- दृढं सूच्या लौहमवि तादृश्यापि बुद्ध्या भेत्तुमशक्यमतो योगेनापि तस्य निग्रहमहं वायोरिव सुदुष्करं मन्ये, न हि वायुर्मुष्टिना धर्त्तुं शक्यते, अतस्तत्रोपायं ब्रूहीति।[40]

**समाधानम्** - अर्जुनस्य अर्थं स्वीकृत्य भगवानुवाच-

**असंशयं महाबाहो मनो दुर्निग्रहं चलम्।**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते।।**[41]

अत्र भाष्यकारो विशदरूपेण व्याख्यां करोति यत् स्वप्रकाशसुखैकतानत्वात्मगुणाभिमुख्येनाभ्यासेनात्मव्यतिरिक्तेषु विषयेषु दोषदृष्टिजनितेन वैराग्येण च मनो निग्रहीतुं शक्यते। तथा चात्मानन्दास्वादाभ्यासेन लयप्रतिबन्धाद्विषयवैतृष्ण्येण च विक्षेपप्रतिबन्धान्निवृत्तचापलं मनः सुग्रहं यथा सदौषधानुसेवया सुपथ्येन च बलवानपि रोगः सुजेयः।[42] एवमभ्यासवैराग्याभ्यां असंयतात्मना विज्ञेनापि पुंसा चित्तवृत्तिनिरोधलक्षणो योगो दुष्प्रापः। ताभ्यां वश्यात्मना पुंसा तादृशप्रयत्नवता स योगः प्राप्तुं शक्यः। अत्र 'उपायतः' इत्यस्य पदस्य अर्थो मदाराधनलक्षणाज्ज्ञानाकारान् निष्काम-कर्मयोगात्।[43]

**भ्रष्टपुरुषस्य गतिः**- अध्यायस्य अन्ते पद्यत्रयेण अर्जुनस्य जिज्ञासा वर्तते-

**अयतिः श्रद्धयोपेतो योगाच्चलितमानसः।**
**अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति।।**
**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति।**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि।।**
**एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः।**
**त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते।।**[44]

---

39. आत्मानं रथिनं विद्धि शरीरं रथमेव तु। बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च।।
इन्द्रियाणि हयानाहुर्विषयस्तेषु गोचरान्। आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः।।
कठोपनिषत् 1/3/3,4, गीताभूषणभाष्यं 6/34

40. गीताभूषणभाष्यं 6/40

41. श्रीमद्भगवद्गीता 6/35

42. गीताभूषणभाष्यं, 6/35

43. असंयतात्मना योगो दुष्प्राप इति मे मतिः। वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः।।
श्रीमद्गभवद्गीता 6/36, गीताभूषणभाश्यं, 6/36

44. श्रीमद्भगवद्गीता, 6/37-39

प्रश्नाशयं विशदयति भाष्यकार: यद् निष्कामतया कर्मणोऽनुष्ठानान्न स्वर्गादिफलम्, योगासिद्धेर्नात्मावलोकञ्च तस्याभूत्। एवमुभयस्माद्विभ्रष्टोऽप्रतिष्ठो निरालम्ब: सन् किं नश्यति, किंवा न नश्यतीत्यर्थ:। छिन्नाभ्रमिवेति अभ्रं मेघो यथा पूर्वस्मादभ्राद्विच्छिन्नं परमभ्रञ्चाप्राप्तमन्तराले विलीयते तद्वदेवेति नाशे दृष्टान्त:। कथमेवं शंका? तत्राह- ब्राह्मण: पथिं प्राप्त्युपाये यदसौ विमूढ:।[45]

अर्जुनस्य प्रश्नं समादधन् भगवानुवाच-

**पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते।**

**न हि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति।।**[46]

पद्येऽस्मिन् तातेति पदस्य प्रयोग:। भाष्यकार: विश्लेषयति- हे तातेत्यतिवात्सल्यात् सम्बोधनम्। ''तनोत्यात्मानं पुत्ररूपेण'' इति व्युत्पत्ते**स्तत: पिता**- ''स्वार्थिकेऽणि'', **तत एव तात:।** पुत्रं शिष्यञ्चातिकृपया ज्येष्ठस्तथा सम्बोधयति।[47]

भगवता अल्पकालारब्धयोगाद्भ्रष्टस्य चिरारब्धयोगाद्भ्रष्टस्य च गति: उक्ता। ''प्राप्य.''[48] इत्यत्र अल्पकालारब्धयोगाद्भ्रष्टस्य गति: दर्शिता। भाष्यकार: निरूपयति यद् यादृशविषयस्पृहया स्वधर्मे शिथिलो योगाच्च विच्युतोऽयं तादृशान् विषयानात्मोद्देश्यकनिष्कामस्वधर्मयोगारम्भमाहात्म्येन पुण्यकृतामश्वमेधादियाजिनां लोकान् प्राप्य भुङ्क्ते तान् भुञ्जानो यावतीस्ततद्भोगतृष्णाविनिवृत्तीस्तावती: शाश्वती: बह्वी: समा: सम्वत्सरांस्तेषु लोकेषूषित्वा स्थित्वा तद्भोगवितृष्णस्तेभ्यो लोकेभ्य: शुचीनां सद्धर्मनिरतानां योगार्हाणां श्रीमतां धनिनां गेहे पूर्वारब्धयोगमाहात्म्यात् स योगभ्रष्टोऽभिजायते।[49]

चिरारब्धाद्योगाद्भ्रष्टस्य गतिमाह-

**अथवा योगिनामेव कुले भवति धीमताम्।**

**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम्।।**[50]

अत्र भाष्यकारकार: कथयति यद् योगिनां योगमभ्यसतां धीमतां योगदेशिकानां कुले भवत्युत्पद्यते। योगार्हाणां योगमभ्यसताञ्च कुले पूर्वयोगसंस्कारबलकृतमेतज्जन्म प्राकृतानामतिदुर्लभम्।[51]

**युक्ततम: क:**- कर्मज्ञानतपोयोगवतां मध्ये क: श्रेष्ठ इत्यपेक्षायामाह भगवान्-

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिक:।**

**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन।।**[52]

45. गीताभूषणभाष्यं 6/39
46. श्रीमद्भगवद्गीता 6/40
47. गीताभूषणभाश्यं, 6/47
48. प्राप्य पुण्यक्रमां लोकानुषित्वा शाठाती: समा:। शुचीनां श्रीमतां मेहे योगभ्रष्टोवभिजायते।। श्रीमद्भगवद्गीता 6/41
49. गीताभूषणभाष्यं, 6/41
50. श्रीमद्भगवद्गीता 6/42
51. गीताभूषणभाष्यं 6/42
52. श्रीमद्भगवद्गीता 6/46

अत्र भाष्यकारः प्रत्येकपदस्य भावार्थं प्रकटयति यथाहि, तपस्विभ्यः- कृच्छ्रादितपः परेभ्यः, ज्ञानिभ्योऽर्थ शास्त्रविद्भ्यः, कर्मिभ्यः सकामेष्टापूर्त्तादिकृद्भ्यश्च, योगी मदुक्तयोगानुष्ठाताधिकः श्रेष्ठो मतः। आत्मज्ञानवैधुर्येण मोक्षानर्हेभ्यः मदुक्तो योगी समुदितात्मज्ञानत्वेन मोक्षार्हत्वात् श्रेष्ठः।[53]

योगिनः सकाशात् क अधिकः इत्यपेक्षायामाह-

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना।**
**श्रद्धावान्भजते यो मां स मे युक्ततमो मतः।।**[54]

अत्र भाष्यकारः क्रममपि प्रदर्शयति, यथा- योगारोहतारतम्यात् कर्मयोगिनो बहवस्तेभ्यः सर्वेभ्योऽपीति ध्यानारूढो युक्तः, समाध्यारूढो युक्ततरः श्रवणादिभक्तिमांस्तु युक्ततम इति। 'भक्ति' इत्यस्य व्याख्यां करोति- ''भक्ति'' शब्दः सेवाभिधायी- ''भज इत्येष वै धातुः सेवायां परिकीर्तितः। तस्मात् सेवा बुधैः प्रोक्ता 'भक्ति' शब्देन भूयसी'' इति स्मृतेः। एतां भक्तिं श्रुतिराह- ''श्रद्धाभक्तिध्यानयोगादवेहि'' इति। सा च भक्तिर्भगवत्स्वरूपशक्तिवृत्तिभूता बोध्या- ''विज्ञानघनानन्दघना सच्चिदानन्दैकरसे भक्तियोगे तिष्ठति'' इति श्रुतेः। तस्याः श्रवणादिक्रियारूपत्वं तु चित्सुखमूर्त्तेः सर्वेश्वरस्य कुन्तलादिप्रतीकत्ववत् प्रत्येतव्यम् - श्रवणादिरूपाया भक्तेश्चिदानन्दत्वन्त्वनुवृत्त्यानुभाव्यं सितानुसेवया पित्तविनाशे तन्माधुर्यमिवेति।।[55]

एवमुपर्युक्तविवरणेनेदं स्पष्टं भवति यद् भाष्यकारः सूक्ष्मदृष्ट्या विषयं प्रतिपादयति। तेन पदपर्यायः प्रयुक्तः, भावार्थः प्रकटीकृतः, पूर्व-उत्तरपक्षपूर्वकं सारल्येन सोदाहरणैः गूढार्थः स्पष्टीकृतः। तथा च प्रमाणं प्रस्तुत्य पुष्टिकृतः। अतएव महत्त्वपूर्णं भाष्यमिदमित्यसन्दिग्धम्।

एसोशियेट् प्रोफेसर,
संस्कृत विभागः,
वनस्थलीविद्यापीठम् (राज.)



53. गीताभूषणभाष्यं 6/46
54. श्रीमद्भगवद्गीता 6/47
55. गीताभूषणभाष्यं 6/47

# शकुनानां प्रभावक्षेत्राणि तच्छान्त्युपायाश्च

**डॉ. जितेन्द्रकुमारगौतमः**

ज्योतिषशास्त्रस्य वैशिष्ट्यमिदं यत् ग्रहगणनानां प्रयोजनं लोकानां शुभाशुभफलकल्पनार्थं मन्यते। फलितज्योतिश्शास्त्रस्य प्रत्येकविभागस्य सम्बन्धः फलेन सह भवति। संहितास्कन्धस्यापि शकुनविभागस्य सम्बन्धः फलेन भवति। अतोऽत्र शकुनानां महत्त्वं किम् ? प्रयोजनं च किम् ? शकुनानां प्रभावक्षेत्राणि कियन्ति ? फलप्राप्तिकारः कः ? शुकुनानां दोषशान्तिविधानञ्च किम् ? इत्यादिप्रश्नानामुत्तराणि परमावश्यकानि विद्यन्ते। अत एवात्र तदर्थमेवायासः क्रियते।

आलोकनविलोकनकुशलाः जनाः सर्वदा स्वीयं शुभाशुभं ज्ञातुं वाञ्छन्ति। किं वा न केवलं सभ्या एवापितु जाङ्गलिका अपि स्वीयं भाग्यं पृच्छन्त्येव। एतदर्थमेव महर्षिभिः फलकल्पनाय फलितज्योतिषस्य जातकताजिक–प्रश्नाङ्गाङ्कस्वरशकुनादिविद्यानामवसरः कल्पितः।शकुनस्यायमर्थो यत् पशुपक्षिणः स्वीयचेष्टाभिः किमपि व्यञ्जयन्त्येव, एवमेते पशुपक्षिणः स्वीयचेष्टाभिः किमपि व्यंजनयन्त्येव, एवमेतेषां पशुपक्षिणां चेष्टाभिः वयं सूचिताः भवामः। शकुनानां प्रयोजनं पूर्वजन्मार्जितस्य शुभाशुभकर्मणः फलप्रकटीकरणमस्ति। वस्तुतः यद् भविता तत् भविष्यति परन्तु पुनरपि भविष्यमाणघटनां विज्ञाय मनसा सन्नद्धो भवति जनः।

अतः सिद्धमिदं यत् शुभाशुभफलानां शकुनद्वारा सूचनैव प्रयोजनं शकुनस्य। उक्तमपि वराहेण–

**अन्यजन्मान्तरकृतं कर्म पुसां शुभाशुभम्।**
**यत्तस्य शकुनः पाकं निवेदयति गच्छताम्**[1]।।

तदनन्तरं वराहः शकुनानां भेदानुक्त्वा वदति यत् शकुनानां भेदाः स्वबुद्धया ज्ञेयाः। वदति च अत्राहं वराहः यात्राकाले शुभाशुभव्यञ्जकशास्त्रं शाकुनं वक्तुं सन्नद्धोऽस्मि। यथा–

**ग्रामाख्यप्रचाराद्यं लोकादेवोपलक्ष्येत्।**
**सञ्चिक्षिप्सुरहं वच्मि यात्रामात्रप्रयोजनम्**[2]।।

1. बृहत्संहिता, शाकुने मिश्रफलविचारः, श्लोकः 5
2. बृहत्संहिता शाकुने मिश्रफलविचारः, श्लोकः– 10

अनेन वराहवचनेनेदं स्फुटं यत् शकुनानि प्रायेण यात्रायां शुभाशुभकथनाय प्रोक्तानि सन्ति। यथा जातकग्रन्थेषु फलकल्पनार्थमेव ग्रहाणां षड्बलं प्रोक्तं तदेव शकुनशास्त्रेऽपि दिक् विभागः ऋतुगुणः फलह्रासवृद्धी कथ्येते। इममेव विभागं दृष्ट्वा अत्र शुकनानां प्रभावक्षेत्राणि निरूपानि सन्ति।

**पथ्यात्मानं नृपं सैन्ये पुरे चोद्दिश्य देवताम्।**

**सार्थे प्रधानं साम्ये स्याज्जातिविद्यावयोऽधिकम्[1]।।**

अर्थात् मार्गे यियासौ जने, सैन्यबलेषु राजनि, जनसमूहे, प्रधानजने, प्रधानानां साम्यतायां जातौ, जातीनां साम्यतायां ज्ञाने तथा ज्ञानस्यापि तुल्यतायां वयोधिके जने शाकुनफलं घटते। दिवसे दिनचरशकुनानि जले जलचरशकुनानि, रात्रौ रात्रिचरशकुनानि बलान्वितानि भवन्ति नपुंसकशकुनेभ्यो स्त्रीशकुनानि, स्त्रीशकुनेभ्यो पुरुषशकुनानि बलवत्तराणि भवन्ति।

कुक्कुटगजमयूरवञ्जुलखदिरचञ्चुछिक्करसिंहनादकरायिकापक्षिणां शकुनानि पूर्वदिशायां बलान्वितानि भवन्ति।

क्रोष्टूलूकहारीतकाककोकर्क्षपिङ्गलानां तथा कपोतादिनां रुदिताक्रन्द्रक्रूरशब्दाश्च दक्षिणदिशि प्रभावान्विताः भवन्ति। पश्चिमायां केषां प्रभावः भवति इति चेत् गोराशक्रोञ्चलोमाशहंसोत्क्रोशकपिञ्जलानां वरशकुनानामन्यशास्त्रैः सह सम्बन्धः।

ननु त्रिस्कन्धज्योतिषस्य सर्वेषामपि भेदानामङ्गानां वा परस्परं सम्बन्धः भवत्येव। तत्र विशेषेण फलनिरूपणावसरे तु प्रश्नजातकताजिकमुहूर्तग्रन्थेषु सम्बन्धः सूचितः। प्रश्नलग्नानुसारं फलचिन्तनविषये दैवज्ञः सर्वमादौ शकुनान्येव पश्येत् इति सर्वत्र कथितः। अत्र सर्वमादौ ताजिकग्रन्थैः सह शकुनानां सम्बन्धः यत्र -यत्र सूचितः तदुच्यते।

ताजिकनीलकण्ठीग्रन्थे वर्षतन्त्रे लग्नगतरविवशात् तथा लग्ननवांशगतसूर्यवशाच्च शुभाशुभस्वप्नानामवस्थितिः सूचिताऽस्ति। यथा-

**लग्नांशगेऽर्के तनुगेऽपि वाऽस्मिन् दुःस्वप्नमीक्षेत यथार्कबिम्बम्।**

**रक्ताम्बरं वह्निमथापि चन्द्रे शुभ्राश्वरत्नाम्बरपुष्पवज्रम्[2]।।**

तथा प्रश्नप्रकरणारम्भे प्रश्नादिनिर्णयमुक्त्वा शकुनज्ञानं प्रश्नफलप्रकरणे परमावश्यकमिति सूचितम्। यथा-

**अश्रौषीश्च पुरा विष्णोर्ज्ञानार्थे समुपस्थितः।**

**वचनं लोकनाथोऽपि ब्रह्मा प्रश्नादिनिर्णयम्[3]।।**

अत्र "प्रश्नादिनिर्णयम्" पदे 'आदि" शब्दे स्वरशकुनादिज्ञानमेव सूचितम्। अत्र प्रश्नस्वरशकुनानां रहस्यमिदं प्रतिभाति यत् पृच्छकः प्रश्नसमये पूर्णमनसा प्रश्नं मनसि निधाय दैवज्ञमनुसरति, तस्मिन् समये पृच्छकस्य ध्यानं तत्प्रश्न एव भवति। अतः तस्मिन् समये, तन्मनसानुसारं, प्रश्नानुसारमेव शरीराङ्गानां स्फुरणं तथा हस्तपादादिचालनमपि तदनुसारमेव भवति। अतः दैवज्ञः सर्वमादौ प्रश्नसमये पृच्छकस्य शरीराङ्गशकुनानि पश्यति। तदनुगुणमेव फलं च वदति।

1. बृहत्संहिता, शाकुने मिश्रफलविचारः, श्लोकः 11
2. ताजिकनीलकण्ठी, मासप्रवेशफलानि, श्लो. 48
3. ताजिकनीलकण्ठी, प्रश्नतन्त्रम्, श्लो.-2

मुहूर्त्तशास्त्रेण सह शकुनानां सम्बन्धं ब्रुवन् मुहूर्त्तचिन्तामणिकारः श्रीरामदैवज्ञः विवाहप्रकरणे कथयति यत् प्रश्नलग्नसमये यदि वीणामाङ्गलिकवाद्यानां शब्दः भवेत् तथा माङ्गलिकवस्तूनां दर्शनं विवाहे कल्याणं सूचयति, परन्तु तद्वैपरीत्ये वायसखरश्वाशृगालानां शब्दश्रवणात् तद्दर्शनाच्चापि विवाहे विघ्नः ज्ञेयः। तद्यथा–

**शङ्खभेरीविपञ्चीरवैर्मङ्गलं जायते वैपरीत्यं तदा लक्षयेत्।**
**वायसो वा खरः श्वा शृगालोऽपि वा प्रश्नलग्नक्षणे रौति नादं यदि[1]।।**

**शकुनानां दोषशान्त्युपायाश्च**

भद्रबाहुसंहितायां षड्विंशतितमाध्याये स्वप्नशकुनानां वर्णनं विद्यते, तत्र सप्तविधशकुनप्रकाराः सन्ति। तत्राशुभस्वप्नस्य शान्त्यर्थं सत्यं वदेदिति वदत्याचार्यः।

यथा– **उपाचरन्नासवाज्ये मृतिं गत्वाप्यकिञ्चनः।**
**ब्रूयाद् वै सद्वचः किञ्चिन्नासत्यं वृद्धये हितम्[2]।।''**

अशुभस्वप्नदर्शनानन्तरं ऊँकारं त्रिवारं जपेत् तदा स्वप्नशान्तिं लभेन्नरः। स्वप्नशकुनानां शान्त्यर्थं देवसाधुब्राह्मणानां पूजनं कर्त्तव्यमिति सांहितिकाः वदन्ति। यथा भद्रबाहुसंहितायाम्–

**देवसाधुद्विजातीनां पूजनं शान्तये हितम्।**
**पापस्वप्नेषु कार्यस्य शोधनं चोपवासनम्[3]।।**

दुर्गासप्तशत्यां त्रिविधोत्पातानां शमनाय दुर्गापाठविधिः प्रोक्तः। यथा–

**उपसर्गानशेषांस्तु महामारीसमुद्भवान्।**
**तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम[4]।।**

विडालशब्दाः गीतोत्सवमाङ्गलिकहासाश्च स्वीयं शुभप्रभावं जनयन्ति। शतपत्रकुरङ्गाखुमृगैकशफकोकिल–पक्षिणः सौम्यदिशि शुभशकुनानि जनयन्ति। वराहाचार्यो वदति यत् वनेषु ग्रामशकुनानि तथा ग्रामेषु वनशकुनानि न गृह्यन्ते, प्रभावहीनत्वात्। तथैव रात्रौ दिवसशकुनानि तथा दिवसे रात्रिशकुनायन्यपि प्रभावशून्यत्वात् न गृह्यन्ते।

**उक्तमपि वराहेण–**

**न ग्राम्योऽरण्ये ग्राह्यो नारण्यो ग्राम्यसंस्थितः।**
**दिवाचरो न शर्वर्यां न च नक्तञ्चरो दिवा[5]।।**

1. मुहूर्त्तचिन्तामणिः, विवाहप्रकरणम्, श्लो.–9
2. भद्रबृहत्संहिता, षड्विंशोऽध्यायः, श्लो. 32
3. भद्रबृहत्संहिता, षड्विंशोऽध्यायः, श्लो. 84
4. दुर्गासप्तशती, द्वादशाध्यायः, श्लोक 8
5. बृहत्संहिता, शाकुने मिश्रफलविचारः, श्लो. 24

ग्रन्थेषु ऋत्वनुगुणमपि शकुनानां प्रभावः भवति। काकपिकयोः पुनः रोहिताश्वाजवालेयाः शिशिरर्तौ प्रभावशून्यशकुनानि जनयन्ति। व्याघ्रर्क्षवानरद्वीपिमहिषाः सबिलेयशाः हेमन्ते निष्फलाः भवन्ति। एवं शकुनानां प्रभावः कालमतिक्राम्य न याति। तथा शकुनप्रभावस्य दिशः, सीमा, कालः, स्थानञ्च भिन्नं भिन्नं भवति।

शकुनस्य प्रयोजनं कथयिता वसंतराजेन उक्तं यत् शकुनं ज्ञात्वा कार्ये कष्टं वारयितुं शक्यते तथा कार्यसिद्धिं कर्तुं शक्यते। यथा-

**सापायमेतन्निरपायमेतत्प्रयोजनं भावि ममेति बुद्ध्या।**[1]
**असंशयं शाकुनशास्त्रविज्ञो जहाति चोपक्रमते मनुष्यः।।**

सहायकाचार्यः, संस्कृतविभागः
ग्लोबलमहाविद्यालयः
लालसोटनगरम्
मो. नं.- 9414255898



1. वसन्तराजशाकुनम्, प्रथमो वर्गः श्लो. -8

वर्ष : 47 अङ्क : 2
अप्रेल-जून, 2022

स्वरमङ्गला
ISSN-2249-9296

# व्याकरणशिक्षणे पुष्पादीक्षितायाः नवीनपद्धतिः

**डॉ. हरीशकुमारवर्मा**

संस्कृतभाषायाः साधुत्वस्य मुख्याधारः पाणिनीयव्याकरणमस्ति। यथा महर्षिपाणिनिः विलक्षणतमः, तथैव तेषां व्याकरणमपि विलक्षणतमम्। एतत् सर्वमद्भुतमिव, यद् भगवता पाणिनिना शब्दानां सिद्ध्यर्थं शब्दाः नोक्ता अपितु तत्रत्यान् लोपागमवर्णविकारान् मनस्याकलय्यैकैकस्य कार्यस्य कृते सूत्राणि प्रोक्तानि। तानि च सूत्राण्यधिकारेषु प्रकरणेषु च निबद्धानि सन्ति। यन्त्रं यथा बहूनि वस्तूनि निर्मातुं प्रभवति तथैव अष्टाध्यायीसूत्रैः बहवः संस्कृतभाषाशब्दाः यान्त्रिकपद्धत्या व्युत्पादयितुं शक्यन्ते, इति पाणिनीयशास्त्रस्य वैशिष्ट्यम्। व्याकरणस्य वैशिष्ट्यमनेन तथ्येन प्रमाणितम्भवति यद्वेदवेदान्तानाम् भाष्यम्भाष्यङ्कथ्यते, परं व्याकरणस्य भाष्यम्महाभाष्यम्।

पाणिनीयव्याकरणस्य द्वे अध्ययनपद्धती स्तः -

**1. अष्टाध्यायीसूत्राणामष्टाध्यायीक्रमेणाध्ययनम् -**

अष्टाध्याय्यां सूत्राणि प्रकरणानुसारं निबद्धानि- यथा, सर्वाणि कारकसम्बन्धिसूत्राणि प्रथमाध्यायस्य चतुर्थपादे, समासविधायकानि सूत्राणि द्वितीयाध्यायस्य प्रथमद्वितीयपादयोः, सन्धिसूत्राणि षष्ठाध्यायस्य प्रथमपादे, इत्यादि। अष्टाध्यायीक्रमे शब्दशास्त्रस्य ज्ञानाय महानायासो भवति। सम्पूर्णामष्टाध्यायीमधीत्यैव कोऽपि प्रयोगाणां साधने सक्षमो भवति।

**2. प्रक्रियापद्धतिः-**

अपरा च पद्धतिः प्रक्रियापद्धतिः, यस्याः प्रामाणिकग्रन्थः भट्टोजिदीक्षितस्य सिद्धान्तकौमुदी अस्ति। अतः सौकर्येणाध्ययनाय परम्परागतपद्धतेः काठिन्यदूरीकरणाय प्रक्रियाक्रमस्य प्रारम्भो जातः। परन्तु प्रक्रियाक्रमेणाध्ययने बहूनि दूषणानि सन्ति। प्रक्रियामनुगन्तारः प्रयोगमेकं लक्ष्यीकृत्य सम्पूर्णसूत्राणि एकत्रीकुर्वन्ति। अनया प्रक्रियया अष्टाध्याय्याः व्यवस्थाखण्डनं जायते। यदि पाणिनीयसूत्राणामध्ययनं विच्छिन्नरूपेण भवेत्, तदा तानि टीकाकर्त्तॄणां स्पष्टीकरणं विना सर्वथा बोद्धुमशक्यानि भवन्ति। तथाहि सिद्धान्तकौमुद्याम् ''आद् गुणः''[1] इति सूत्रम् अच्सन्धौ व्याख्यातम्। अस्य सूत्रास्यार्थो भट्टोजिदीक्षितेन एवं कृतः यत्-''अवर्णादचि परे पूर्वपरयोः एको गुणादेशः स्यात् संहितायाम्''[2] इति। अस्य सूत्रस्यार्थप्रतिपादनावसरे 'अचि, पूर्वपरयोः, एकः, संहितायाम्' इति पदानि कुतः समागतानि इत्यस्य ज्ञानं प्रक्रियाक्रमेण न जायते। प्रक्रियाग्रन्थाध्येतारः अधिकारसूत्राणां मर्मानभिज्ञाः भवन्ति। कारणमेतदेव यत्ते व्याकरणे परिश्रमातिशयेनापि प्रयोगविज्ञानं नावजानन्ति, प्रयोगसिद्धिकरणे तु समर्थाः भवन्ति। प्रक्रियाग्रन्थाः

प्रयोगाभिलक्ष्याः भवन्ति। तान् प्रयोगान् अभिसेद्धुं सूत्राणि तत्रानीयन्ते। अतः वयं तेषां सूत्राणां तावन्तमर्थमवज्ञातुं शक्नुमः, यावान् तस्य प्रयोगस्य कृते आवश्यकः, अवशिष्टोऽर्थः बुद्धिगम्य एवावस्थीयते। यथा–''वचिस्वपियजादीनां किति''[3] सूत्रे एकादश धातवः सन्ति। अतः कित्प्रत्ययेषु एतेषाम् एकादशधातूनामुदाहरणानि ज्ञातव्यान्यस्माभिः। कौमुद्यान्तु वयं यज्धातोः उदाहरणान्याप्यामहे, यथा–ईजतुः, ईजुः। सूत्रस्यावशिष्टोऽर्थः सोदाहरणं अवगमनायावशिष्ट एव भवति। अग्रे कुत्रापि निखिलग्रन्थे नोद्वर्ण्यते, अनुमानगम्यः एव भवति। अनया प्रक्रियया अष्टाध्याय्याः व्यवस्थाक्रमः भङ्गी भवति। कारणादेतस्मात् प्रक्रियाध्येतारः, अधिकारसूत्राणां मर्मविषये नावज्ञातुं पारयन्ति। कारणादेतस्मादेव ते व्याकरणे परिश्रमाधिक्येन प्रयोगान् तु विनिर्मान्ति, परञ्च प्रयोगनिर्माणविज्ञानं नावजानन्ति।

**पुष्पादीक्षितायाः तृतीयापद्धतिः**–

अष्टाध्यायीक्रमे प्रक्रियाक्रमे एताः न्यूनताः अवलोक्य एका ईदृशी पद्धतिः आवश्यकी आसीत्, यस्यां पद्धत्यामुभयोः पद्धत्योः समन्वयः स्यात्। अतः महामहोपाध्यायोपाधिविभूषितया प्रो. पुष्पादीक्षितया अष्टाध्यायीसहजबोधरूपे तृतीया पद्धतिराविष्कृता। अस्यां पद्धत्यां पाणिनीयाष्टाध्याय्याः विज्ञानं स्पष्टङ्कुर्वती प्रयोगस्यैकस्य निर्माणप्रक्रियावबोधसदृशाकृतेः प्रयोगान् तत्स्थले एव प्रदर्श्य इदमित्थं पद्धतिराविष्कृता, यया पद्धत्या सकलाष्टाध्यायी वर्षैकेण हृदयङ्गमा भवेत्।

पाणिनीयाष्टाध्यायी एव व्याकरणमूलम्। पाणिनीयव्याकरणं लौकिकवैदिकोभयशब्दसिद्धिकरणात् सर्वोच्चप्रतिष्ठां भजते। भगवतः पाणिनेरिदं लक्ष्यं न परित्यक्तमंशमात्रामपि प्रो. पुष्पादीक्षितमहोदयया। अस्मिन् एकोऽपि धातुः न त्यक्तः पाणिनीयधातुपाठस्य, नैव च दशसु लकारेषु लकारः क्वचित् परित्यक्तः। स्ववैज्ञानिकबुद्ध्या प्रमाणमुपस्थापयन् लेट्लकारं सार्वधातुक, आर्धधातुकरूपयोः विभज्य एतादृश्यां सरलपद्धतौ गुम्फनं कृतम् यतः लौकिकशब्दवदेव वैदिकशब्दानामप्यवगमनं स्यात्। अष्टाध्याय्याः धात्वधिकारस्य धातुपाठस्य च माध्यमेन लकारसम्बन्धे महामुनिपाणिनिना यत्किमपि अभिधत्तम्, तत्समग्रतया अस्यां पद्धतौ उपलब्धम्। अष्टाध्यायीसहजबोधनामकमार्गः पाणिनीयव्याकरणावगमाय नूतनः पन्थाः। एतत्पूर्वं न केनापि व्याख्यातः ग्रन्थः एषः, अनया पद्धत्या।

प्रक्रियादृष्ट्या अष्टाध्याय्याः तिङन्तप्रकरणं गभीरं प्रकरणं वर्तते। मूलाधारश्चैतदष्टाध्याय्याः धात्वधिकारः, पाणिनीयधातुपाठश्च।[4] सिद्धान्तकौमुद्याः प्रक्रियायां धातवः पाणिनीयधातुपाठक्रमे[5] पठिताः, लकाराश्च लट्, लिडित्याद्यकारादिक्रमे[6] पठ्यते पाठ्यते च। प्रक्रमेणानेन गौरवं भवति। अतः अष्टाध्यायीसहजबोधस्य प्रथमभागे धातवः लकाराश्च पाणिनिविज्ञानानुसारं स्पष्टीकृताः। यच्च अधोलिखितनिर्देशैः वर्ण्यते–

**धातूनां विभाजनम्**– अष्टाध्याय्याः तृतीयेऽध्याये धातुभ्यः प्रत्ययानां विधानन्तदन्तक्रमेण क्रियते, अङ्गकार्याण्यपि तदन्तक्रमेण। यथा– ''आतोऽनुपसर्गे कः''[7], ''आतो युच्''[8], इत्येतैः सूत्रैरादन्तेभ्यो धातुभ्यः प्रत्ययाः विधीयन्ते। ''आतो लोप इटि च''[9], ''आतो युक्चिण्कृतोः''[10], इति आकारान्तानां कृतेऽङ्गकार्याणि च। एवमेव ''एरच्''[11] इति इकारान्तेभ्यः, ''ओरावश्यके''[12] इत्युकारान्तेभ्यः, ''ऋहलोर्ण्यत्''[13] इति ऋकारान्तेभ्यः, ''ॠदोरप्''[14] इति ॠकारान्तेभ्यः, इति धातूनामन्त्यमचमाश्रित्य तेभ्यः प्रत्ययाः विधीयन्ते। ''सार्वधातुकार्धधातुकयोः''[15], ''एरनेकाचोऽसंयोगपूर्वस्य''[16] इत्यादिभिः तेषां कृतेऽङ्गकार्याणि च।

किन्तु हलन्तेभ्यो धातुभ्यः प्रत्ययविधानमुपधाक्रमेण क्रियतेऽङ्गकार्याणि अपि तथैव। यथा–''पोरदुपधात्''[17], ''अतोलान्तस्य''[18] इत्यादीनि सूत्राणि अदुपधधातूनां कृते सन्ति। ''इगुपधज्ञाप्रीकिरः कः''[19], ''पुगन्तलघूपधस्य

च''[20], इत्यादीनि सूत्राणि इगुपधधातूनां कृते। ''ऋदुपधाच्चाक्लृपिचृतेः''[21], ''रीगृदुपधस्य च''[22], ''उर्ऋत्''[23], इत्येतानि सूत्राणि ऋदुपधधातूनां कृते सन्ति।

इत्थमालोचनेन निष्कर्षः प्राप्यते यत् यदा धातोः कश्चित् प्रत्ययः युज्यते, तदा असावजन्तधातूनामन्त्यस्वरं, हलन्तधातूनामुपधास्वरं प्रभावयति। प्रत्ययानां प्रभावदृष्ट्या तथा धातूनामन्यकार्यदृष्ट्या प्रो. पुष्पादीक्षिता पाणिनीयधातुपाठन्तु पाणिनेरनुसारमेव पूर्णतया स्वीकरोति, परञ्च तत्क्रमं पूर्णतया परिवर्त्य एवं करोति, तद्यथा-

## अजन्तधातूनां विभाजनम्[24]

1. आकारान्ताः, यथा-पा, या, ला, वा, मा, इत्यादयः।
2. इकारान्ताः, यथा-जि, श्वि, चि, कि, रि, इत्यादयः।
3. ईकारान्ताः, यथा-नी, शी, डी, क्री, वी, इत्यादयः।
4. उकारान्ताः, यथा-द्रु, दु, नु, कु, गु, क्षु, इत्यादयः।
5. ऊकारान्ताः, यथा-पू, लू, नू, इत्यादयः।
6. ऋकारान्ताः, यथा-हृ, भृ, धृ, स्मृ, इत्यादयः।
7. ॠकारान्ताः, यथा-शॄ, झॄ, शॄ, इत्यादयः।
8. एजन्ताः, यथा-धे, शो, छो, ग्लै, इत्यादयः।

## हलन्तधातूनां विभाजनम्[25]

9. अदुपधाः, यथा-पठ्, चल्, पच्, इत्यादयः।
10. इदुपधाः, यथा-चित्, मिद्, छिद्, इत्यादयः।
11. उदुपधाः, यथा-बुध्, शुध्, मुद्, इत्यादयः।
12. ऋदुपधाः, यथा-कृष्, वृष्, नृत्, इत्यादयः।
13. अवशिष्टाः (ये न सन्त्येषु वर्गेषु),यथा-मील्, शीक्, इत्यादयः।

अजन्तधातून् तदन्तक्रमेण, अथ च हलन्त धातूनुपधाक्रमेण, सर्वेषां धातूनामेकैकस्य लकारस्य सिद्धिः, इत्येवं विधिः। अतः अनेन विधिना कृतेन धातूनामुपर्युक्तविभाजनेनैकस्मिन् प्रत्यये परतः, एकस्य वर्गस्यैकस्य धातोः सिद्धिर्यथा भवति, तथैव तस्य वर्गस्यान्येषां धातूनां स्वयमेव तस्मिन् प्रत्यये। यथा- पू-पुपाव। एवमेव-पा-पपौ। अत्र नास्ति कश्चन भेदः।

**लकाराणां विभाजनम्-** प्रक्रियाग्रन्थेषु यथा कौमुद्यादिषु लकाराणां लट्, लिट्, लुट्, इत्यकारादिक्रमे विभाजनं प्रचख्यौ, अकारादिक्रमेण लकाराणां रूपनिर्माणप्रक्रियायां महदन्तरमस्ति। यथा-'भू' धातोः रूपं, लट्लकारे 'भवति' इति प्रथमपुरुषस्य एकवचनात्प्रारभ्यते। लिट्लकारे च 'बभूव' इत्यतः प्रारभ्यते। अतः लट्लकारोत्तरं लिट्लकारस्य रूपनिर्माणमन्यो विधिः।

काठिन्यमिदमनुभूय प्रो. पुष्पादीक्षितया पाणिनिविज्ञानमनुसृतम्। भगवता पाणिनिना वारद्वयम् आर्धधातुकस्या-धिकारं विधाय आर्धधातुकप्रत्ययसम्बन्धिनं कार्यं साकमेव उदवर्ण्यत। तथा ''अत उत् सार्वधातुके'', ''नाभ्यस्तस्याचि

पिति सार्वधातुके'', ''रुदादिभ्यः सार्वधातुके'', आदिभ्यः सूत्रेभ्यः अनुवृत्तिं गृहीत्वा सार्वधातुकप्रत्ययान्वितं कार्यं सार्धं क्रियते। प्रमाणमेतद् यत् भगवन्ते पाणिनये सार्वधातुकार्धधातुककार्यं पृथक्तया करणमभिलषितम्। यथा ''सार्वधातुकार्धधातुकयोः'', ''क्ङिति च'' इत्यादिषु सूत्रेषु पाणिनिः उभौ प्रयुङ्क्ते, लाघव एव हेतुस्तत्र।

वस्तुतस्तु सार्वधातुकार्धधातुकौ भिन्नौ पन्थानौ स्तः। एतयोः पृथक्तया गमनमेव सारल्यम्। प्रक्रियाग्रन्थानां न्यूनतामपाकरणाय पाणिनिविज्ञानमनुसृत्य प्रो. पुष्पादीक्षितया महच्चातुर्येण प्रक्रियादृष्ट्या लकाराः भागद्वये व्यभज्यन्त।[26]

**1. सार्वधातुकलकाराः, 2. आर्धधातुकलकाराश्च।**

सार्वधातुकलकारेषु लट्, लोट्, लङ्, विधिलिङ्, सार्वधातुकलेट्लकाराः च संगृहीताः। एतैः सार्वधातुकलकारैः सह कर्त्रर्थकसार्वधातुकप्रत्ययाः यदा युज्यन्ते, तदा धातुप्रत्यययोर्मध्ये तद्गणीयविकरणं नूनमेव आगमिष्यति। तद्यथा– भू+ति, भू+शप्+ति, भवति, लकाराणामेतेषां रूपप्रक्रिया समानैव।

यदि लट्लकारानन्तरं लोट्लकारस्य रूपाणि विनिर्मीयेत, तदा कानिचन सूत्राणि परिवर्त्त्य रूपाणि विनिर्मातुं शक्नुमः। यथा– लट्लकारस्य प्रथमपुरुषैकवचने भूधातोः रूपं 'भवति', लोट्लकारे च 'भवतु'। अत्र लकारविधायकं सूत्रं यदि परिवर्त्त्यते, तथा ''एरुः''[27] सूत्रेण इकारस्य उकारो विधीयेत, तदा लोट्लकारस्य 'भवतु' सिध्यति। इत्थं लट्लकारस्य यानि रूपाणि, यथा प्रक्रियया विनिर्मीयन्ते, तत्प्रक्रियायाः कतिपयान् अंशान् परिवर्त्त्य लोट्, लङ्, विधिलिङ्, इत्येषां लकाराणां रूपाणि सेत्स्यन्ति।

आर्धधातुकलकारेषु लिट्, लुट्, लृट्, आशीर्लिङ्, लुङ्, लृङ्, (आर्धधातुक) लेट्, च एते सप्तलकाराः गृहीताः। एतेषां सप्तार्धधातुकलकाराणां ये प्रत्ययाः भविष्यन्ति, तान् योजनसमये धातुप्रत्यययोर्मध्ये विकरणं न भविष्यति। यथा –भू+यात्, भूयात्। एतदेव अनयोः लकारयोः प्रक्रियायाः भेदः।

अनेन प्रकारेण प्रो. पुष्पादीक्षिता स्वसूक्ष्मेक्षिकया लकाराणां द्विधा विभाजनं विधाय विलक्षणतमं मार्गं प्रास्तौत्, लाघवश्च तस्मिन् मार्गे।

## संदर्भाः


1. श्रीपाणिनिः, अष्टाध्यायी, 6/1/86
2. श्रीभट्टोजिदीक्षितः, वैयाकरणसिद्धान्तकौमुदी, पूर्वार्द्धम्, पृष्ठाङ्कः 52
3. श्रीपाणिनिः, अष्टाध्यायी, 6/1/15
4. श्रीमतीपुष्पादीक्षिता, अष्टाध्यायीसूत्रापाठः (प्रकरणनिर्देशसमन्वितः), पृष्ठाङ्कः, सूत्रसंख्या 3/ 1/ 22–3/ 4/ 117
5. श्रीभट्टोजिदीक्षितः/वैयाकरणसिद्धान्तकौमुदी/उत्तरार्द्धम्/भ्वादिप्रकरणतः चुरादिप्रकरणम्/पृष्ठाङ्कः 10 तः– 243 पर्यन्तम्
6. श्रीभट्टोजिदीक्षितः/वैयाकरणसिद्धान्तकौमुदी/उत्तरार्द्धम्/ पृष्ठाङ्कः 2,3
7. श्रीपाणिनिः, अष्टाध्यायी, 3/2/3
8. श्रीपाणिनिः, अष्टाध्यायी, 3/3/128
9. श्रीपाणिनिः, अष्टाध्यायी, 6/4/64
10. श्रीपाणिनिः, अष्टाध्यायी, 7/3/33

11. श्रीपाणिनिः, अष्टाध्यायी, 3/3/56
12. श्रीपाणिनिः, अष्टाध्यायी, 3/1/125
13. श्रीपाणिनिः, अष्टाध्यायी, 3/1/124
14. श्रीपाणिनिः, अष्टाध्यायी, 3/3/64
15. श्रीपाणिनिः, अष्टाध्यायी, 7/3/84
16. श्रीपाणिनिः, अष्टाध्यायी, 6/4/84
17. श्रीपाणिनिः, अष्टाध्यायी, 3/1/98
18. श्रीपाणिनिः, अष्टाध्यायी, 7/2/2
19. श्रीपाणिनिः, अष्टाध्यायी, 3/1/135
20. श्रीपाणिनिः, अष्टाध्यायी, 7/3/86
21. श्रीपाणिनिः, अष्टाध्यायी, 3/1/110
22. श्रीपाणिनिः, अष्टाध्यायी, 7/4/90
23. श्रीपाणिनिः, अष्टाध्यायी, 7/4/7
24. श्रीमतीपुष्पादीक्षिता, अष्टाध्यायी सहजबोधः, प्रथमो भागः, पृष्ठाङ्कः 2
25. श्रीमतीपुष्पादीक्षिता, अष्टाध्यायी सहजबोधः, प्रथमो भागः, पृष्ठाङ्कः 2
26. श्रीमतीपुष्पादीक्षिता, अष्टाध्यायीसहजबोधः, प्रथमो भागः, पृष्ठाङ्कः 5
27. श्रीपाणिनिः, अष्टाध्यायी, 3/4/86

व्याख्याता
राजकीय–आचार्य–संस्कृत–महाविद्यालयः
कोटकासिम (अलवरम्)



वर्ष : 47 अङ्क : 2
अप्रेल-जून, 2022

स्वरमङ्गला
ISSN-2249-9296

# वैदिकवाङ्मये लोकजीवनम्

**डॉ. रामेश्वरप्रसादगुप्तः**

वेदब्राह्मणोपनिषदारण्यकाः सूत्रग्रन्थाश्च वैदिकवाङ्मये प्रगणिताः वर्तन्ते। वैदिकवाङ्मयम् अतिविशालमस्ति। वैदिकवाङ्मये लोकजीवनस्य विविधायामाः सन्ति। अत्र धर्मार्थरीतिनीतयः सन्ति, कर्मकाण्डविषयकज्ञानमस्ति, सामाजिकसंस्काराः वर्णिताः सन्ति, लोकाचारविषयकाः विचाराः विद्यन्ते। तथा च वर्णाश्रम-व्यवस्थासम्बन्धिचिन्तनमपि अत्र परिलक्ष्यते। यथोल्लेखः वर्तते, यत्-

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।**

**ऊरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत।।** (ऋग्वेदः, 10-90-12)

वैदिकमानवसमाजे सर्वे वर्णाः समाना एव आसन्। जातिगतप्रभेदः तत्र नासीत्। तस्मिन् समाजे नारीणां सम्मानमपि अतिशयरूपेण प्रदृष्टम्। यथा-

**'माता भूमिः'** (अथर्ववेदः 12-1-12)

**'मातृदेवो भव'** (तैत्तिरीयोपनिषद्, शिक्षावल्ली-11-2)

**'जाया गार्हपत्योऽग्निः'** (ऐतरेयब्राह्मणम् - 8-24)

**'माता गुरुतरा भूमेः'** (महाभारतम्- 4-313-70)

**'यत्र नार्यस्तु पूज्यन्ते, रमन्ते तत्र देवताः'**- मनुस्मृतिः 3-62, इत्यादिसूक्तयः नारीणां सम्मानं प्रकटयन्ति। वैदिक-मानवसमाजे समानता प्रवर रूपेण आसीत्। यथा ऋग्वेदे उल्लेखः वर्तते, यत्-

**''संगच्छध्वं संवदध्वं सं वो मनांसि जानताम्।''** (ऋग्वेदः, 10-191-2)

तथा च - **''समानी व आकूतिः समानो हृदयानि वः।**

**समानमस्तु वो मनो यथा वः सुसहासति।।''** (ऋग्वेदः, 10-191-4)

संस्काराणां प्रतिष्ठा वैदिकसमाजे तु आसीत् एव। तत्र लोकजीवने संस्काराणां महत्त्वं नन्वासीत् एव। सर्वे वर्णाः संस्कारोत्सवं मंगलरीत्या कुर्वन्तिस्म। जातकस्य जन्मसंस्कारः, ननु उपनयनसंस्कारः तथा च विवाहसंस्कारः विशेषमहोत्सवेन सह सम्पन्नाः भवन्ति स्म।

बृहदारण्यकोपनिषदि जातकर्मसंस्कारस्य वर्णनं विशेषेण मिलति।[1] ऐतरेयब्राह्मणेऽपि जातकर्मसंस्कारस्य विवेचनं वर्तते।[2] शतपथब्राह्मणे जातकस्य नामकरणसंस्कारस्य विषये विशेषोल्लेखः त्वस्ति।[3] ऋग्वेदे, तथा च ब्राह्मणग्रन्थेषु उपनयनसंस्कारस्यावसरे आनन्दप्रदायिमहोत्सवस्य वर्णनं मिलति।

लोकजीवनसम्बन्धिप्रधानसंस्कारः ननु विवाहसंस्कारः वर्तते। वैदिकवाङ्मये अस्य संस्कारस्य विशेषवर्णनं मिलति। संस्कारेऽस्मिन् वधूं प्रति प्रदत्तः शुभाशीर्वादस्य उल्लेखः हृदयमाह्लादयति। यथा-

**सुमङ्गलीरियं वधूरिमां समेत पश्यत।**

**सौभाग्यमस्यै दत्त्वायाथास्तं विपरेतन।।** (ऋग्वेदः, 10-85-33)

**सम्राज्ञी श्वशुरे भव, सम्राज्ञी श्वश्वां भव।**

**ननान्दरि सम्राज्ञी भव, सम्राज्ञी अधिदेवृषु।।** (ऋग्वेदः, 10-85-46)

**यथा सिन्धुर्नदीनां साम्राज्यं सुषवे वृषा।**

**एष त्वं साम्राज्येधि पत्युरस्तं परेत्य।।** (अथर्ववेदः, 1-14-10)

विवाहस्य 'अष्टप्रकाराः' वैदिकवाङ्मये विस्तारेण वर्णिताः। वैदिकसमाजे अन्तर्जातीयविवाहप्रथा बहुविवाहप्रथा च प्रचलिता आसीत्। यथोल्लेखः वर्तते, यत्-

**पतिं च पत्नीरुशती रुशन्तं।** (ऋग्वेदः, 1-62-11)

**सं मा तपन्त्यभितः सपत्नीरिव पर्शवः।** (ऋग्वेदः, 1-105-8)

**पतिमकृणुतं कनीनाम्।** (ऋग्वेदः, 1-116-10)

वैदिकसमाजः कृषिप्रधानसमाजः नन्वासीत्। कृषकाः पशुपालनमपि कुर्वन्ति स्म। अवकाशस्य समये केचित् जनाः द्यूतक्रीडामपि कर्तुम् उद्यताः आसन्। यथोल्लेखः, यत्-

**प्रावेपा मा बृहतो मादयन्ति, प्रवातेजा इरिणे ववृतानाः।**

**सोमस्येव मौजवतस्य भक्षो, विभीदको जागृविर्मह्यमच्छान्।।** (ऋग्वेदः, अक्षसूक्तं-1)

द्यूतम् एकं व्यसनम् अस्ति, अत एव ऋग्वेदे द्यूतक्रीडायाः निन्दा कृता। उल्लेखः वर्तते, यत्-

**अक्षैर्मा दीव्यः कृषिमित् कृषस्व।**

**वित्ते रमस्व बहु मन्यमानः।**

**तत्र गावः कितवस्तत्र जाया।**

**तन्मे विचष्टे सवितायमर्यः।।** (ऋग्वेदः, अक्षसूक्तम्, 13)

---

1. बृहदारण्यक-उपनिषद् - 1-5-2, 6-4
2. ऐतरेयब्राह्मणम् - 8-20
3. शतपथ ब्राह्मणम्-8-80-9

वैदिकवाङ्मये लोकजीवनस्य विविधानि दृश्यानि प्रदिष्टानि। तत्र शोभनग्राम्यजीवनं निर्दिष्टम्। लोकमनोरंजन-साधनानि वेदेषु बहुलतया वर्णितानि। शिशूनां बालकानां च कृते तेभ्यः क्रीडनाय काष्ठक्रीडनकसामग्रीसमुल्लेखः वेदेषु अस्ति। वैदिकसाहित्ये वस्त्रनिर्माणाय सूत्रग्रन्थनसाधनानि विवेचितानि। कृषि-उपकरणविषये तत्र विशदज्ञानं समुपलब्धम् एव।

वैदिककालिकं लोकजीवनं सद्गुणैः समावृतम् आसीत्। तत्र सत्यस्य प्रतिष्ठा आसीत्। यथोक्तं, यत्-

**सत्यं वद, धर्मं चर** (तैत्तिरीयोपनिषद्, 1-11-1)

**सत्येन लभ्यः ह्येष आत्मा** (मुण्डकोपनिषद्, 3-1-5)

इत्यादिभिः सूक्तिभिः स्पष्टमस्ति यत् वैदिक-लोकजीवने सदाचारस्य प्राधान्यम् आसीत्। तत्र समाजे कार्यकर्म प्रति निष्ठा निरूपिता अस्ति। कर्महीनः जनस्तु दस्युः कथितः। यथा-

**अकर्मा दस्युः** (ऋग्वेदः, 10-22-8)

वैदिकसमाजे यज्ञकर्माणि लोकजीवनस्य अङ्गभूतानि आसन्। वेदेषु ऋषिभिः सह सामाजिकजनाः प्रायः यज्ञकार्येषु संलग्नाः प्रदर्शिताः। सम्पूर्णवैदिकसाहित्ये मूर्तिपूजायाः तूल्लेखः नास्ति, किन्तु देवस्तुतिपरकसूक्तानि बहुलतया उल्लिखितानि। वैदिकवाङ्मये प्रदिष्टाः देवस्तुतयः मानवजीवनस्य प्रधानाङ्गभूताः निरूपिताः। देवानां स्तुतिपरकमन्त्राः वैदिकसाहित्ये बहुलतया सन्ति। यथा-

**अग्निमीडे पुरोहितं, यज्ञस्य देवमृत्विजम्।**

**होतारं रत्नधातमम्।।** (ऋग्वेदः, अग्निसूक्तम्, 1-1-1)

**विष्णोर्नु कं वीर्याणि प्रवोचम्।** (ऋग्वेदः, विष्णुसूक्तम्, 1-154-1)

**यो जात एव प्रथमो मनस्वान्।।**

**देवो देवान्क्रतुना पर्यभूषत्।** (ऋग्वेदः, इन्द्रसूक्तम्, 2-12-1)

इत्यादयः ननु उल्लेखाः वैदिकमानवानां देवान् प्रति आस्थां प्रकटयन्ति, आस्तिकतां च ज्ञापयन्ति। वैदिकवाङ्मयं स्पष्टं करोति, यत् तस्मिन् समये जनानां साहित्यं प्रति विशेषाभिरुचिः आसीत्। ऋषयः मन्त्रद्रष्टारः च साहित्यसर्जनां प्रति समर्पितभावेन संलग्नाः त्वासन् तस्मिन् समये। वेदाः वेदाङ्गाश्च प्रमाणमस्य सन्ति। साहित्यिकसंगोष्ठीनां प्रचलनं तदा मानवसमाजे विशेषेण आसीत्। यज्ञावसरे साहित्यिकचिन्तनं परिचर्या वा अभवत् एव। साहित्यिकगोष्ठी तदा 'नारीशक्ति' इति नाम्ना प्रसिद्धा आसीत्।

'मानवस्य सहचरी प्रकृतिः,' इति सिद्धं प्रसिद्धं चास्ति। सम्पूर्णवैदिकवाङ्मयं 'मानवसमाजस्य प्रकृतेः च' प्रगाढसम्बन्धं प्रकटयति। स्पष्टमिदमपि अस्ति, यत् पावनप्रकृतिप्राङ्गणे मानवाः ऋद्धिं सिद्धिं समृद्धिं च प्राप्नुवन्ति। वैदिककाले प्रत्येकं प्राकृतिकघटकः पवित्रः समृद्धश्च आसीत्। निर्मलं जलं प्रवहतिस्म, समृद्धाः पादपाः धरां तु अलं कुर्वन्ति स्म। धरा निर्मला आसीत्। प्रदूषणरहितं पवनं प्रवहति स्म। वायुमण्डलं विमलं च वर्णितम्। सूर्य-उषस्-सविता-पर्जन्यः द्यावापृथिवी, आपस्-अग्नि-इत्यादयः सूक्तसंग्रहाः ननु अस्योदाहरणानि सन्ति। तस्मिन् समये प्रकृतिं प्रति जनानां हार्दिकं प्रेम आसीत्। वैदिकसमये जनाः तु आत्मीयभावेन प्रकृतिं संवर्धयन्ति स्म। समृद्धा प्रकृतिः च लोकान् रञ्जयति स्म। अनेन प्रकारेण कथ्यं इदं समीचीनमेव, यत् वैदिकलोकजीवनं प्राकृतिकलोकजीवनमासीत्।

वैदिकवाङ्मये पशुपक्षिणः जीवजन्तवश्च मानवसमाजस्य सहायकरूपेण उल्लिखिताः। ब्राह्मणैः सह मण्डूकानाम् उपमा अस्य प्रमाणमस्ति। यथा-

**संवत्सरं शशयाना ब्राह्मणाः व्रतचारिणः।**
**वाचं पर्जन्यजिन्वितां प्रमण्डूको अवादिषुः।।** (ऋग्वेदः, 7-103-1)

निष्कर्षतः वैदिकसमये लोकजीवनं सहजं सारल्योपेतं ऋजुतापूर्णं च आसीत्। वैदिकवाङ्मयानुसारेण स्पष्टमस्ति, यत् वैदिक मानवसमाजः संस्कारयुक्तः, सुशिक्षितः, धर्मकर्मपरायणः, राष्ट्रभक्तः प्रकृतिप्रेमी, प्राकृतिकसुषमोपेतः, सौहृदभावयुतः कार्यकर्म प्रति निष्ठावान् च आसीत्। तस्मिन् समये सर्वेषां जनानां हृदयेषु राष्ट्रीयभावना प्रतिष्ठिता आसीत्। 'यतेमहि स्वराज्ये'- (ऋग्वेदः 5-66-6), 'वयं राष्ट्रे जागृयाम'- (यजुर्वेद 9-23), ''माता भूमिः पुत्रो अहं पृथिव्याः'' (अथर्ववेदः, 12-1-12), इत्यादिभिः सूक्तिभिः उपर्युक्तं सिद्धमेवास्ति। 'मनुर्भव' (ऋग्वेदः, 10-53-6) अर्थात् हे मानव! मानवतां धारय तथा च 'तन्मे मनः शिवसंकल्पमस्तु' (यजुर्वेदः, 34-1) आदयः तूल्लेखाः लोकजीवने मानवतायाः परिपोषकाः सन्ति। एवमेव ''उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत।'' (कठोपनिषद्, 1-3-14) इयं सूक्तिः लोकजीवने अध्यात्मभावनां निवेशयति।

अस्तु, वैदिकवाङ्मये लोकजीवनम् आदर्शयुतम् अध्यात्मयुतं च वर्णितम्। तत्कालिकलोकजीवनस्य आदर्शाः वर्तमान-समये सर्वजनैः ननु अनुकरणीयाः आचरणीयाश्च वर्तन्ते। इति शम्।

सेवानिवृत्तः संस्कृत-प्राध्यापकः,
प्रस्तोता- निवासः- श्रीमतीलक्ष्मीगुप्ता-भवनम्,
उद्योगविभागस्य समीपे, सिविल लाइन्स,
दतिया (म. प्र.) - 475661
सम्पर्कसूत्रम्- 9826249448



# वेदेषु ज्योतिषवास्तुशास्त्रादिविषयाणां सङ्केतः

- नितिनकुमारढण्ढः

**ॐस्वस्ति न इन्द्रो वृद्धश्रवाः। स्वस्ति नः पूषा विश्ववेदाः।**
**स्वस्ति नस्ताक्ष्यों अरिष्टनेमिः। स्वस्ति नो बृहस्पतिर्दधातु।।**

वेदाः अपौरुषेयाः अर्थात् पुरुषं विना, ईश्वरकृता मन्यन्ते, एतान् श्रुतिः अप्युच्यते। हिन्दुधर्मे अन्ये उपनिषदादिग्रन्थाः श्रुतिः अप्युच्यते। ज्योतिषसम्बन्धिज्ञानं वेदेषु वर्तते। तत्र ऋग्वेदे प्रायः सप्तत्रिंशत् (37) श्लोकाः ज्योतिषसंबंधिनः सन्ति। ''वेद'' शब्दः संस्कृतभाषायाः विद् धातोः निष्पन्नो भवति। ''विद्'' इत्यस्य अर्थः ज्ञानम्। वेदः भारतीयसंस्कृत्यां सनातनधर्मस्य मूलम् अर्थात् प्राचीनतमः आधारभूतः धर्मग्रन्थः वर्तते, स च ईश्वरवाणी मन्यते।

वेदानां प्रवर्तनं यज्ञानां सम्यक् सम्पादनाय अभूत्। ते यज्ञाःअपि कालस्य सम्यक् ज्ञाने एव यथाविधि सम्पन्नाः भवन्ति। इदं ज्योतिषशास्त्रं कालस्य आश्रयं ग्रहण् विधायकः अस्ति, अतः यः ज्योतिषं जानाति, सः सर्वं जानाति। फलप्राप्तेः समयं शास्त्रमिदं तथैव व्यक्तं करोति यथा अन्धकारे स्थितपदार्थान् दीपकः। भारतीयसंस्कृत्याः मूलाधाराः वेदाः सन्ति। वेदेनैव अस्माभिः स्वधर्मसदाचारयोः ज्ञानं प्राप्यते। भारतीयविद्याः वेदैः एव प्रकटिताः जाताः। मन्त्राणाम् उचितोच्चारणाय शिक्षायाः, यज्ञीयानुष्ठानाय कल्पस्य, शब्दानां रूपज्ञानाय व्याकरणस्य, अर्थज्ञाननिमित्तं शब्दानां निर्वचनाय निरुक्तस्य, वैदिकमन्त्रार्थज्ञानाय छन्दसः तथा च अनुष्ठानाम् उचितकाल-निर्णयाय ज्योतिषस्य उपयोगः मान्यो वर्तते।

महर्षिणा पाणिनिना ज्योतिषं वेदपुरुषस्य नेत्रम् उक्तम्। यथा मनुष्यः चक्षुषी विना - कस्यचिदपि वस्तुनोः दर्शने असमर्थः भवति, तथैव वेदशास्त्रविहित-कर्माणि ज्ञातुं ज्योतिषस्य अन्यतमं महत्त्वं सिद्धं वर्तते। भूतलस्य, अन्तरिक्षस्य एवं भूगर्भस्य प्रत्येकपदार्थस्य त्रैकालिकं यथार्थज्ञानं येन शास्त्रेण अस्ति, तत् ज्योतिषशास्त्रम् अस्ति। अतः ज्योतिषं ज्योतिःशास्त्रं वर्तते। ज्योतिषशास्त्रेण त्रैकालिकप्रभावं ज्ञातुं शक्यते। वेदस्यान्याङ्गानामपेक्षया स्वविशेषयोग्यतायाः कारणेन एव मुख्यता अस्ति। तथा च अस्य अन्यं कारणम् इदमपि अस्ति यत् भविष्यं ज्ञातुं इच्छा सर्वेषु युगेषु मनुष्याणां मनसि सर्वदा प्रबला भवति।



**यदुपचितमन्यजन्मनि शुभाशुभं तस्य कर्मणः पक्तिम्।**
**व्यञ्जयति शास्त्रमेतत्तमसि द्रव्याणि दीप इव।।**

अनेनैव कारणेन ज्योतिषं नेत्रम् उच्यते। नेत्रस्य कार्यं भवति सम्यक् अवलोकनम्। नेत्रमिदं मानवानां सामान्यनेत्रवन्न वर्तते, यस्मिन् प्रेम-लिप्सा एवं प्रसादादेः कारणेन दृष्टिदोषकारणेन यथार्थज्ञानमपि मिथ्या प्रतीयते, फलतः तथ्येन परे धारणा निर्मिता भवति, किन्तु वेदपुरुषस्य नेत्रम् एकमेतादृशं नेत्रं वर्तते, एका एतादृशी दिव्यदृष्टिः वर्तते, यया दृष्ट्या सम्पूर्णं ब्रह्माण्डं तथा च समस्तजीवानां प्रत्यक्षाप्रत्यक्षं व्यवहिताव्यवहितं समस्तकर्म दृष्टिगोचरं भवति। यथा शरीरे कर्ण नासिका आदि अन्याङ्गानाम् अविकलविद्यमानतायाम् अपि नेत्रस्य अभावे व्यर्थता प्रतीयते, व्यक्तिः किमपि कर्तुं असमर्थः भवति, तथैव अन्यशास्त्राणां विद्यमानतायाम् अपि नेत्ररूपी चक्षुषा हीनं अर्थात् ज्योतिषशास्त्रं विना वेदस्य अपूर्णता एव भवति, एतदर्थं कृषि व्यापार उद्योग यज्ञ सदाचार धर्म व्यवसायेभ्यः तथा च जीवनयात्रायै शुभकालनिर्णयाय ज्योतिषमेव एकमात्रसाधनं वर्तते। कर्मणां कः कालः श्रेष्ठः, किं मुहूर्तम् उत्तमं, इदं व्याकरणादिशास्त्रैः ज्ञातुं न शक्यते। मुहूर्तस्य उपयोगिता यज्ञादिकर्मणे शुभसमयं ज्ञातुं कालमानस्य ज्ञानम् आवश्यकं भवति। कालोऽपि शुभाशुभमिश्रितं भवति। वशिष्ठादिभिः ऋषिभिः शास्त्रमिदं कालविधायकं शास्त्रम् उक्तम्। अत एव कालविधायकशास्त्रज्ञानात् पूर्वं कालस्य ज्ञानं, प्रातः उत्थानात् आरभ्य स्वप्नपर्यन्तस्य नित्यचर्या, सम्पूर्णजीवनचर्या, गर्भात् आरभ्य मृत्युपर्यन्तं तदनन्तरं भविष्यस्य वार्ताः, परलोक-पुनर्जन्मनोः वार्ताः तथा च भूतकालस्य स्थितिं ज्योतिषम् अभिव्यक्तम् करोति। ज्योतिषभास्करः भास्कराचार्यः वदति यत् अन्येषु जन्मसु यत् किमपि शुभकर्म कृतं भवेत्, तस्य फलं तथा आवश्यकं वर्तते।

**अप्रत्यक्षाणि शास्त्राणि विवादस्तेषु केवलम्।**
**प्रत्यक्षं ज्योतिषं शास्त्रं चन्द्रार्कौ यत्र सक्षिणौ।।**

इदमेव शास्त्रं अस्ति, यस्मिन् जन्मतः मरणपर्यन्तस्य सर्वेषां शुभाशुभकर्मणां मुहूर्तानां तथा च ग्रहाणां गोचरादेः फलानां तत्तद्देशानुसारं विचारः कृतः।

### ज्योतिषं वेदश्च

ज्योतिषं समयस्य विज्ञानं वर्तते,अस्मिन् तिथिः,वारः, नक्षत्रं, योगः, कर्म चैतेषां पञ्चविषयाणाम् अध्ययनं कृत्वा भविष्ये भूयमानानां घटनानां ज्ञानं दीयते।

**वेदस्य षड् अङ्गानि भवन्ति** - (1) शिक्षा (2) छन्दः (3) व्याकरणम् (4) निरुक्तम् (5) कल्पः (6) ज्योतिषम्। अत्र षष्ठः अङ्गः ज्योतिषं वर्तते।

लगध-रचितो ''वेदाङ्गज्योतिषम्'' नामको ग्रन्थः अस्य प्रतिनिधिग्रन्थः वर्तते। अस्य तृतीये श्लोके ज्योतिषस्य उपयोगिता एवम् प्रकारेण उक्तं वर्तते—

**वेदा हि यज्ञार्थमभिप्रवृत्ताः कालानुपूर्वं विहिताश्च यज्ञाः।**
**तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञम्।।**

अर्थात् वेदानां प्रवृत्तिः यज्ञानुष्ठानस्य उद्देश्येण अभूत्, यज्ञानां विधानं कालस्य अधीनं वर्तते (कालविशेषे यज्ञाः अनुष्ठिताः भवन्ति) अतः या व्यक्तिः कालस्य विधानं कुर्वती ज्योतिषशास्त्रमिदं जानाति, सैव यज्ञस्य ज्ञानं जानाति। वेदाङ्गानाम् अनुक्रमणी - वेदानां रक्षणार्थमभूत्। अनुक्रमण्याः अर्थः वर्तते सूची। वेदानां ऋषयः,छन्दाः,देवताः, सूक्तानि, अनुवादकाः, तथा च पदानां सूची, गणना-सहितं दत्तम् अस्ति। ऋग्वेदस्य रक्षायै शौनकेन दश (10)

अनुक्रमणीनां रचना कृता (शौनकीयदश ग्रन्थास्तदा ऋग्वेदगुप्तये)। तथाहि—आर्षानुक्रमणी, छन्दोऽनुक्रमणी, देवतानुक्रमणी, अनुवाकानुक्रमणी, सूक्तानुक्रमणी, ऋग्विधानं, पादविधानं, बृहद्देवता, प्रातिशाख्यं, शौनकस्मृतिः च। अथर्ववेदस्य अनुक्रमणीषु **बृहत्सर्वानुक्रमणी** प्रसिद्धा वर्तते। चरणव्यूहसूत्रं शौनकस्य कृतिरूपेण प्रसिद्धग्रन्थः वर्तते।

आवासीयावश्यकतानां पूर्तेः उद्देश्येन वास्तुशास्त्रस्य उदयः अभूत्। वैदिकग्रन्थेषु ऋग्वेदः एतादृशः प्रथमः ग्रन्थः वर्तते यस्मिन् धार्मिकं तथा च अवासीयं वास्तोः रचनायाः वर्णनं प्राप्यते। यद्यपि पूर्ववैदिककाले वास्तोः उपयोगः विशेषरूपेण यज्ञवेदीनां रचनायै तथा च यज्ञशालायाः निर्माणार्थं भवति स्म, किन्तु शनैः शनैः अस्य उपयोगः देवप्रतिमाभिः सह देवालयानां निर्माणे भवननिर्माणे च आरब्धः अभूत्। यद्यपि वास्तुशास्त्रस्य क्रमिकविकासस्य क्रमः अप्राप्तः इव प्रतीयते। वैदिकग्रन्थेषु **वास्तोः** अर्थः — **भवननिर्माणम्** अथवा भूःइत्यनेन अस्ति यस्यार्थः निवासस्थानं वर्तते। **अथर्ववेदस्य उपवेदः** स्थापत्यम् एव अग्रे वास्तुः अथवा शिल्पशास्त्रस्य नाम्ना प्रसिद्धोऽभूत्। एषः उपवेदः एव अस्माकं वास्तुशास्त्रस्य आधारः वर्तते। परमपितापरमात्मना ब्रह्मणे यदा सृष्टेः रचनायाः कार्यं प्रदत्तम्, तदा तेषां चतुर्षु मुखेषु चतुर्वेदानां जन्माभूत् तथा च वास्तुविद्या, धनुर्विद्या, चिकित्सा अर्थात् आयुर्विद्या तथा च सङ्गीतविद्याः प्रादुर्भाविताः, वेदेषु ज्योतिषसम्बद्धा आहत्य त्रिचत्वारिंशदधिकद्विशतं ( **243** ) श्लोकाः वर्तन्ते। ऋग्वेदे सप्तत्रिंशत् (37), यजुर्वेदे चतुश्चत्वारिंशत् (44), अथर्ववेदे द्विषष्ट्यधिकैकशतं (162) च श्लोकाः सन्ति।




षड्वेदाङ्गेषु ज्योतिषस्य संहितास्कन्धान्तर्गतं वास्तुविद्यायाः वर्णनं मिलति। यथा–

ज्योतिषं विना वास्तुशास्त्रविद्या अपूर्णा वर्तते। वास्तुज्योतिषयोः साहचर्यं वर्तते। वास्तुशास्त्रे मुहुर्तस्य अत्यधिकं महत्त्वं वर्तते, विना ज्योतिषं मुहूर्तं ज्ञातुं न शक्यते। वास्तुशास्त्रस्य वैज्ञानिकम् आध्यात्मिकं च आधारः वर्तते। यदि वेदेषु ईश्वरे च विश्वसिति तर्हि किमपि कारणं नास्ति यत् वास्तौ विश्वासः न कुर्यात्। येन प्रकारेण अस्माकं शरीरं पञ्चमहाभूतैः निर्मितं वर्तते, तेनैव प्रकारेण यदि कस्यचिद् भवनस्य निर्माणे पञ्चमहाभूतानां पर्याप्तध्यानं कुर्यात्तर्हि भवने सुखपूर्वकं निवासं करिष्यन्ति। एते पञ्चमहाभूताः सन्ति — पृथिवी, जलं, अग्निः, वायुः, आकाशः चेति।

वास्तोः सम्बन्धितं वेदेषु यस्य नाम सर्वोपरि आयाति सः ऋग्वेदः। ऋग्वेदे अस्य उल्लेखः वर्तते यत् कस्यचिदपि भवनस्य निर्माणात् पूर्वं वास्तोस्पतिदेवस्य पूजा करणीया। वास्तोः द्वौ प्राचीनग्रन्थौ स्तः **विश्वकर्माप्रकाशः**

**समराङ्गणसूत्रधारः** च ययोः वास्तोः सम्पूर्णवर्णनं प्राप्यते। पृथिव्याम् अस्यां सम्यक् रूपेण निवासनिर्माणस्य विद्या वास्तुविद्या कथ्यते। समराङ्गणसूत्रधारग्रन्थे उक्तं वर्तते यत् पृथ्वी मुख्यवास्तुः वर्तते, तस्मिन् यः उत्पन्नो भवति, तेषां निवासः (आश्रयः) यः प्रसादादिः निर्मीयते, तेऽपि (गौण) वास्तुः उच्यन्ते।—

**वास्तुशास्त्रं** - ऋग्वेदे गृहं ''वेश्म'' इति उक्तम्। गृहस्य प्राप्तिः पुण्यानां फलस्वरूपं भवति। एषापि वार्ता उक्ता। एवम् प्रकारेण वास्तोस्पतेः अपि उल्लेखः कृतः। श्मोजस्येदं पुष्करिणीव ''वेश्म'' परिष्कृतं देवमानवचित्रम्। (ऋग्वेदः 10/107/10) वास्तोष्पतेः स्वास्थ्यप्रदगृहाय तथा उन्नतिशीलगृहाय प्रार्थना कृता —

**वास्तोष्पते प्रतिजानीह्यस्मान् स्त्ववेशा अनमीवे भव नः।**
**यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भवद्विपदेशं चतुष्पदे।।**
**वास्तोष्पते प्रतरणो न एधि गयस्फानो गोभिरश्वेभिरिन्दो।**
**अजरासस्ते सख्ये स्याम पितेव पुत्रान प्रति नो जुषस्व।।**
**वास्तोष्पते शग्म मया संसदाते सक्षीमहे रण्वयागातुमत्या।**
**पाहि क्षेम उत योगे वरं नो यूयं पात स्वस्तिभिः सदा नः।।** (ऋग्वेदः 7.54.1-3)

अथर्ववेदे एकस्मिन् स्थाने गृहस्य अन्तःनिवासमानयोः द्वयोः देवयोः अग्नेः तथा विष्णोः गृहं रत्नेन धनेन वा पूरितुं प्रार्थनां कुर्वता उक्तम्—

**अग्नाविष्णु महि तद्वांमहित्वं पाथो घृतस्य गुह्यस्य नाम।**
**दमे दमे सप्त रत्नादधानौ प्रति वां जिह्वा घृतमा चरण्यात।।**
**अग्नाविष्णूमहि धाम प्रियं वांवीथोघृतस्य गुह्याजुषाणौ।**
**दमे दमे सुष्टुत्यावावृधानौ प्रति वां जिह्वाघृतमुच्चरण्यात्।।** (अथर्ववेदः 7.29.1-2)

हिन्दूसंस्कृत्यां देवपूजायाः विधानं वर्तते। प्रत्येकस्मिन् वास्तौ प्रत्येकस्मिन् पिण्डे च देवत्वस्य कल्पना एव हिन्दूसंस्कृत्याः एका उदात्तभावना वर्तते। देवपूजा साकारनिराकारयोः द्वयोःप्रकारयोः भवति। वैदिकसंहितानामनुसारेण वास्तोस्पतिः साक्षात् परमात्मनो नामान्तरं वर्तते। यतोहि ते एव विश्वब्रह्माण्डरूपी वास्तोः स्वामिनः सन्ति। आगमानां पुराणानामनुसारेण च वास्तुपुरुषनामक-उपदेवतायाःउपरि ब्रह्मा, इन्द्रः, आदि लोकपालसहितं पञ्चचत्वारिंशत् (45) देवताः अधिष्ठिताः भवन्ति ये वास्तोःकल्याणं कुर्वन्ति।

**ॐ पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते। पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते।।**
**ॐ शान्तिः शान्तिः शान्तिः ।।**

डिप्लोमा ज्योतिष एवं वास्तुशास्त्र,
विद्यार्थी- स्नातकोत्तर (ज्योतिष),
श्रीलालबहादुरशास्त्री राष्ट्रीयसंस्कृतविश्वविद्यालयः, नई दिल्ली
मो. - 7665433111



# विद्वत् समीक्षा समिति

## (Peer Review Committee)

| | | |
|---|---|---|
| 1. | **प्रोफेसर दयानन्द भार्गव ( राष्ट्रपति सम्मानित )**<br>पूर्व आचार्य एवं अध्यक्ष संस्कृत-विभाग,<br>जय नारायण व्यास विश्वविद्यालय, जोधपुर (राज.) | **dayanandbhargav@gmail.com**<br>**93141-89878** |
| 2. | **प्रोफेसर मीरा द्विवेदी**<br>संस्कृत-विभाग, दिल्ली विश्वविद्यालय, दिल्ली | **drmeeradwivedi@gmail.com**<br>**98718-71071** |
| 3. | **प्रोफेसर बीना अग्रवाल**<br>पूर्व आचार्य एवं अध्यक्ष, संस्कृत-विभाग,<br>राजस्थान विश्वविद्यालय, जयपुर (राज.) | **beena.agr@gmail.com**<br>**94144-42037** |
| 4. | **प्रोफेसर धर्मचन्द जैन**<br>पूर्व आचार्य एवं अध्यक्ष, संस्कृत-विभाग,<br>जय नारायण व्यास विश्वविद्यालय, जोधपुर (राज.) | **dcjain.jnvu@gmail.com**<br>**94132-53084** |
| 5. | **प्रोफेसर बाल शास्त्री**<br>पूर्व आचार्य एवं अध्यक्ष, व्याकरण-विभाग, संस्कृतविद्या एवं धर्मविज्ञान संकाय, काशी हिन्दू विश्वविद्यालय, वाराणसी, (उ. प्र.) | **bshastri.bhu@gmail.com**<br>**94154-46968** |
| 6. | **प्रोफेसर सुरेन्द्र कुमार शर्मा**<br>पूर्व निदेशक, संस्कृत-शिक्षा विभाग, राजस्थान | **jaiman.sk47@gmail.com**<br>**98878-52472** |
| 7. | **प्रोफेसर श्रीकिशोर मिश्र**<br>संस्कृत-विभाग, काशी हिन्दू विश्वविद्यालय,<br>वाराणसी (उ. प्र.) | **skmishra0024@gmail.com**<br>**94156-85328** |
| 8. | **डॉ. विनोद कुमार शर्मा**<br>अध्यक्ष, ज्योतिष विभाग,<br>जगद्गुरु रामानन्दाचार्य राजस्थान<br>संस्कृत विश्वविद्यालय, मदाऊ, जयपुर | **vsvyasa@gmail.com**<br>**82090-50038** |
| 9. | **डॉ. शम्भु कुमार झा**<br>पूर्व वेद-विभागाध्यक्ष,<br>जगद्गुरु रामानन्दाचार्य राजस्थान<br>संस्कृत विश्वविद्यालय, मदाऊ, जयपुर | **shambhujha64@gmail.com**<br>**91662-27681** |
| 10. | **डॉ. गोपाल मिश्र**<br>पूर्व दर्शन-विभागाध्यक्ष,<br>राजकीय महाराज आचार्य संस्कृत कॉलेज, जयपुर | **gpal.maharaj@gmail.com**<br>**96368-60193** |



आज़ादी का अमृत महोत्सव





।। माता भूमिः पुत्रो अहं पृथिव्याः ।।

भूमि हमारी माता है, हम उसके पुत्र हैं।

अथर्ववेद 12.1.12



आज़ादी का अमृत महोत्सव






।। सत्येनोत्तभिता भूमिः ।।

भूमि सत्य पर टिकी है ।

अथर्ववेद 14.1.1




।। यस्यां वृक्षा वानस्पत्या ध्रुवास्तिष्ठन्ति विश्वहा ।।

पृथ्वी पर चारों ओर वृक्ष और वनस्पतियों से ही जीवन टिका है।

अथर्ववेद
12.1.27




।। रक्षति ब्रह्मेदं भारतम् ।।

वेद भारत की रक्षा करता है।

ऋग्वेद
3.53.12


facebook.com/Rajsanskritacademy


youtube.com/channel/UCJDUkw0ChVHYvm4yu5_EKAg


twitter.com/Sanskritsangam?t=b04YUEXwCh8jyqQmnbAdog&s=08